त्वमेतां जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः ।
षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥ ९ ॥

त्वम् । एतान् । जनऽराज्ञः । द्विः । दश । अबन्धुना । सुऽश्रवसा । उपऽजग्मुषः ।
षष्टिम् । सहस्रा । नवतिम् । नव । श्रुतः । नि । चक्रेण । रथ्या । दुःऽपदा । अवृणक् ॥

हे इन्द्र श्रुतः **विख्यातः** त्वम् अबन्धुना **बन्धुरहितेन सहायवर्जितेन** सुश्रवसा **एतन्नामकेन राज्ञा निमित्तेन** एतान् **प्रसिद्धान्** उपजग्मुषः **उपगतान् निरोधं कृतवतः** द्विर्दश **द्विगुणितान् दशसंख्याकान् । विंशतिसंख्याकान् इत्यर्थः । तथा** षष्टिं सहस्रा **सहस्राणां षष्टिं षष्टिसहस्रसंख्याकान् तथा** नवतिं नव **नवोत्तरनवतिसंख्याकान्** जनराज्ञः **जनानां भटानां स्वामिनः उक्तसंख्याकान् सेनानायकान्** दुष्पदा **दुष्पदनेन शत्रुभिर्गन्तुम् अशक्येन** रथ्या **रथार्हेण** । 'रथाद् यत्' ( पा ४,३,१२१ ) **इति यत्** । चक्रेण न्यवृणक् **न्यवर्जयः अनाशयः । वृजी वर्जने । रौधादिकः । लङि मध्यमैकवचने** 'हल्ङ्याब्भ्यः॰' ( पा ६,१,६८ ) **इति सिपो**[1] **लोपः** । 'चोः कुः' ( पा ८,२,३० ) **इति कुत्वम्** ।

त्वमाविथ सुश्रवसं तवोतिभिस्तव त्रामभिरिन्द्र तूर्वयाणम् ।
त्वमस्मै कुत्समतिथिग्वमायुं महे राज्ञे यूने अरन्धनायः ॥ १० ॥

त्वम् । आविथ । सुऽश्रवसम् । तव । ऊतिऽभिः । तव । त्रामऽभिः । इन्द्र । तूर्वयाणम् ।
त्वम् । अस्मै । कुत्सम् । अतिथिऽग्वम् । आयुम् । महे । राज्ञे । यूने । अरन्धनायः ॥१०॥

हे इन्द्र त्वम् सुश्रवसम् **पूर्वमन्त्रे अबन्धुना सुश्रवसेत्युक्तम् असहायं दुर्बलम् एतन्नामानं राजानं** तव ऊतिभी **रक्षाभिः** आविथ **ररक्षिथ । तथा तस्यैव राज्ञोऽर्थाय** तूर्वयाणम् **एतत्संज्ञकं राजानं** तव त्रामभिः **पालनैः । आवियेति**[2] **संबन्धः । त्रैङ् पालने** । 'आदेचः॰' ( पा ६,१,४५ ) **इति आत्वम्** । 'आतो मनिन्॰' ( पा ३,२,७४ ) **इति मनिन् । नित्त्वाद् आद्युदात्तत्वम् । एवं** त्वम् अस्मै **सुश्रवसे राज्ञे । कीदृशाय** । महे **महते** यूने **वयःस्थाय युवराजभूताय** कुत्सम् अतिथिग्वम् आयुं **च** अरन्धनायः **वशम् अनैषीः । रन्धनं वशीकरणं करोति** । 'तत् करोति॰' ( पावा ३,१,२६) **इति णिच्** । 'णाविष्ठवत् प्रातिपदिकस्य' ( पावा ६,४,१५५ ) **इति इष्ठवद्भावाद् टिलोपः । लङि सिपि दीर्घश्छान्दसः** ।

य उदृचीन्द्र देवगोपाः सखायस्ते शिवतमा असाम ।
त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ॥ ११ ॥

---

[1]. सिचो S'.    [2]. अरंधनाय इति S'.

ये । उत्ऽऋचिं । इन्द्र । देवऽगोपाः । सखायः । ते । शिवऽतमाः । असाम । त्वाम् । स्तोषाम । त्वया । सुऽवीराः । द्राघीयः । आयुः । प्रऽतरम् । दधानाः ॥ ११ ॥

हे इन्द्र ये **वयम्** उदृचि **उदर्के यज्ञसमाप्तौ वर्तमाना** देवगोपाः **देवेन त्वया पालिताः** ते **तव** सखायः **सखिवद् अत्यन्तप्रियाः अत एव** शिवतमा असाम **अतिशयेन कल्याणा अभूम। अस भुवि। लुङर्थे लोटि** 'आडुत्तमस्य पिच्च' ( पा ३,४,९२ ) **इति पिद्भावात्** 'पिच्च ङिन्न' ( तु. पामा ३,१,८३ ) **इति ङित्त्वाभावे** 'श्नसोरल्लोपः' ( पा ६,४,१११) **इत्यकारलोपाभावः। पित्त्वादेव तिङोऽनुदात्तत्वम्। धातुस्वरः शिष्यते। ते वयं यज्ञसमाप्त्युत्तरकालमपि** त्वां स्तोषाम **स्तवाम। स्तौतेर्लोटि** 'सिब्बहुलं लेटि' ( पा ३,१,३४ ) **इति बहुलग्रहणात् लोट्यपि सिप्। तस्य पित्त्वाद् गुणः। अस्माभिः स्तुतेन** त्वया सुवीराः **शोभनपुत्रवन्तः सन्तः** द्राघीयः **अतिशयेन दीर्घम्** आयुः **जीवनं** प्रतरम् **प्रकृष्टतरं यथा भवति तथा** दधानाः **धारयन्तो भूयास्म**[1]।

**इति तृतीयेऽनुवाके चतुर्थं सूक्तम्।**

**अतिरात्रे क्रतौ मध्यमपर्याये ब्राह्मणाच्छंसिनः शस्त्रे** 'अभि त्वा वृषभा सुते' **इत्यादीनि चत्वारि सूक्तानि विनियुक्तानि। चतुर्थसूक्तस्य अन्तिमा** 'बर्हिर्वा यत्स्वपत्याय' **इत्येषा परिधानीया। सूत्रितं हि।** 'मध्यमे त्रिवृदसि' **इति प्रक्रम्य**—" 'अभि त्वा वृषभा सुते' ( १ ), 'अभि प्र गोपतिं गिरा' ( ४ ) इति स्तोत्रियानुरूपौ। 'बर्हिर्वा यत्स्वपत्याय[2]' ( अ २०,२५,६ ) इति परिधानीया। 'प्रोग्रां पीतिम्' ( अ २०,२५,७ ) इति याज्या" ( वैताश्रौ २६,८–१० ) **इति।**

'ऊर्ध्वं सर्वत्र त्रीणि [3]सूक्तानि। अन्त्यं[3] पच्छः पर्यासः' ( वैताश्रौ २६,६ ) **इति सूत्रितत्वात् सर्वत्र त्रिषु पर्यायेषु स्तोत्रियानुरूपाभ्याम् ऊर्ध्वं सूक्तत्रयं शंसनीयम्। अतः** 'आ तू न इन्द्र मद्र्यक्' ( अ २०,२३ ) **इत्यादिसूक्तत्रयस्य मध्यमपर्यायशस्त्रे विनियोग उपपन्नः। अतः** 'अश्वावति' ( अ २०,२५ ) **इत्यस्य तृतीयसूक्तस्य अन्तिमा परिधानीयात्वेन सूत्रकृता सूत्रिता।**

अभि त्वा वृषभा सुते सुतं सृजामि पीतये। तृम्पा व्यश्नुही मदम् ॥१॥

अभि । त्वा । वृषभ । सुते । सुतम् । सृजामि । पीतये । तृम्प । वि । अश्नुहि । मदम् ॥

**हे** वृषभ **वर्षक इन्द्र** सुते **सोमे अभिषुते सति** सुतम् **अभिषवादिना संस्कृतं सोमं** पीतये **पानाय** त्वा **त्वाम्** अभि सृजामि **संयोजयामि तेन सृष्टेन सोमेन** तृम्प[4]

---

१. °स्मः S'. २. यत्स्वपत्या नास्ति S'. ३. सूक्तान्यन्तः S'. ४. तृप S'.

प्रीतो भव । तृम्प तृप्तौ । तुदादित्वात् शः । हेर्लोपः । विकरणस्वरेण अन्तोदात्तः । त्वं च मदम् मदकरं सोमं व्यश्नुहि विशेषेण व्याप्नुहि । अशू व्याप्तौ । व्यत्ययेन परस्मैपदम् ।

**मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् । माकीं ब्रह्मद्विषो[1] वनः ॥२॥**

मा । त्वा । मूराः । अविष्यवः । मा । उपऽहस्वानः । आ । दभन् । माकीम् । ब्रह्मऽद्विषः । वनः ॥

हे इन्द्र त्वा त्वाम् अविष्यव· अविं [? अविषं] कर्तुम् इच्छन्तः अथवा आत्मानं पालयितुं कामयमानाः त्वदनुग्रहम् अन्तरेण आत्मानं रक्षन्तः । अवि [? अविष] शब्दात् क्यच् । 'क्याच्छन्दसि' ( पा ३,२,१७० ) इति उप्रत्ययः । प्रत्ययस्वरेण अन्तोदात्तः । अत एव मूराः मूढा आत्महितोपायम् अजानन्तः । मूरशब्दस्य मूढशब्दपर्यायतां यास्क आह — "'मूरा अमूर न वयं चिकित्वः ×××' (ऋ १०,४,४)। मूढा[2] वयं स्मः । अमूढस्त्वम् असि" ( नि ६,८ ) इति । मा आ दभन् मा हिंसन्तु । तथा उपहस्वानः उपहसनकर्तारोऽपि त्वां मा आ दभन् । उपपूर्वात् हसतेः 'अन्येभ्योऽपि दृश्यन्ते'[3] ( पा ३,२,७५ ) इति वनिप् । कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । त्वं च ब्रह्मद्विषः ब्राह्मणद्वेष्टॄन् माकीम् । माशब्दपर्यायो माकींशब्दः । मा वनः मा भजेथाः । वन षण संभक्तौ । लङ् । मध्यमैकवचनम् । 'न माङ्योगे' ( पा ६,४,७४ ) इति अडभावः ।

**इह त्वा गोपरीणसा[4] महे मन्दन्तु राधसे । सरो गौरो यथा पिब ॥ ३ ॥**

इह । त्वा । गोऽपरीणसा । महे । मन्दन्तु । राधसे । सरः । गौरः । यथा । पिब ॥३॥

हे इन्द्र त्वा त्वाम् इह यागे गोपरीणसा । विकारे प्रकृतिशब्दः । गोविकारेण पयसा मिश्रितेन सोमेन[5] । परिपूर्वाद् व्याप्तिकर्मणो नसतेः क्विप् । 'अन्येषामपि दृश्यते' ( पा ६,३,१३७ ) इति दीर्घः । महे महते राधसे धनाय मन्दन्तु ऋत्विजो मादयन्तु । त्वं च सरः सरणशीलम् उदकं सरःस्थं वा गौरः गौरमृगो यथा अत्यन्ततृषितः सन् निकामं पिबति तथा पिब ।

**अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । सूनुं सत्यस्य सत्पतिम् ॥ ४ ॥**

अभि । प्र । गोऽपतिम् । गिरा । इन्द्रम् । अर्च । यथा । विदे । सूनुम् । सत्यस्य । सत्ऽपतिम् ॥

हे स्तोतः गोपतिम् स्वर्गस्य गवां वा स्वामिनम् इन्द्रं यथा येन प्रकारेण विदे अस्मान् स्वीयतया जानाति । विदेर्व्यत्ययेन लिडात्मनेपदम् । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' ( पावा ६,१,८ ) इति द्विर्वचनाभावः । 'यावद्यथाभ्याम्' ( पा ८,१,३६ ) इति निघातप्रतिषेधः । प्रत्ययस्वरेण अन्तोदात्तः । तथा गिरा

---

१. °द्विषं[2] कौ २,८२. २. मूरा S'. ३. दृश्यते S'. ४. °णसं कौ २,८३.
५. अत्रार्थे स्वरः ?

अभि प्रार्च प्रकर्षेण अभ्यर्च पूजय । कीदृशम् इन्द्रम् । सत्यस्य सत्यफलस्य यज्ञस्य सत्यस्यैव वा सूनुम् पुत्रस्थानीयम् । यत्र यज्ञस्तत्रेन्द्र इति पितृपुत्रवद् अव्यवहितसंबन्धात् सूनुत्वोपचारः । सत्पतिम् सतां स्वसेवकानां पालयितारम् ।

आ हर॑यः [1]ससृज्रि॒रेऽरु॑षी॒रधि॑ ब॒र्हिषि॑ । यत्रा॒भि सं॒नवा॑महे ॥ ५ ॥

आ । हर॑यः । स॒सृ॒ज्रि॒रे[2] । अरु॑षीः । अधि॑ । ब॒र्हिषि॑ । यत्र॑ । अ॒भि । स॒म्ऽनवा॑महे ॥ ५ ॥

अरुषीः अरुष्यः । अरुषम् इति रूपनाम । आरोचमानाः आङ्पूर्वाद् रुचेर्बाहुलकाद् उषच् । टिलोपः । आङो ह्रस्वश्च । 'अन्यतो ङीष्' (पा ४,१,४०)। वृषादित्वाद् आद्युदात्तः[3]। उक्तरूपा हरयः अधि बर्हिषि । अधिः सप्तम्यर्थानुवादी । बर्हिषि आस्तृते आ ससृज्रिरे आससृजिरे आसृजन्तु । इन्द्ररथम् इति शेषः । यत्र यस्मिन् बर्हिषि । इन्द्रम् अभि संनवामहे अभिसंस्तुमः । नु स्तुतौ । 'आङुत्तमस्य पिच्च' ( पा ३,४,९२ ) इति पित्त्वाद् धातुस्वरेण आद्युदात्तः ।

इन्द्रा॑य॒ गाव॑ आ॒शिरं॑ दुदु॒ह्रे व॒ज्रिणे॒ मधु॑ । यत् सी॑मुपह्व॒रे वि॒दत् ॥ ६ ॥

इन्द्रा॑य । गाव॑ः । आ॒ऽशिर॑म् । दु॒दु॒ह्रे । व॒ज्रिणे॑ । मधु॑ । यत् । सी॒म् । उ॒प॒ऽह्व॒रे । वि॒दत् ॥६॥

वज्रिणे वज्रयुक्ताय इन्द्राय गावो मधु मधुरम् आशिरम् आश्रयणसाधनं पयः दुदुह्रे दुहते । दुह प्रपूरणे । 'बहुलं छन्दसि' (पा ७,१,८ ) इति लिटि रुट् । वचनव्यत्ययः । प्रत्ययस्वरेण अन्तोदात्तः । यद्वा इरेच इकारलोपश्छान्दसः । चित्त्वाद् अन्तोदात्तः । यत् यदा उपह्वरे समीपे वर्तमानं मधु मधुवत् स्वादुभूतं सोमं सीम् सर्वतः विदत् स इन्द्रो लभते । विद्लृ लाभे । लृदित्त्वाद् अङ् । 'बहुलं छन्दसि°' ( पा ६,४,७५ ) इति अडभावः । 'निपातैर्यद्यदि' ( पा ८,१,३० ) इत्यादिना निघातप्रतिषेधः । प्रत्ययस्वरेण अन्तोदात्तः ।

इति तृतीयेऽनुवाके पञ्चमं सूक्तम् ।

'आ तू न इन्द्र मद्र्यक्' इति सूक्तस्य अतिरात्रे मध्यमे रात्रिपर्याये ब्राह्मणाच्छंसिनः शस्त्रे विनियोग उक्तः ।

आ तू न॑ इन्द्र म॒द्र्य॑ग्घुवा॒नः सोम॑पीतये । हरि॑भ्यां या॒ह्यद्रिवः ॥१॥

आ । तु । नः॒ । इ॒न्द्र॒ । म॒द्र्य॑क् । हु॒वा॒नः । सोम॑ऽपीतये । हरि॑ऽभ्याम् । या॒हि॒ । अ॒द्रि॒ऽवः॒ ॥

हे अद्रिवः । अद्रिरिति वज्रनाम । वज्रवन् इन्द्र हुवानः हूयमानस्त्वं मद्र्यक् मदभिमुखः सन् नः अस्मदीये यज्ञे सोमपीतये सोमपानार्थम् हरिभ्याम् आ याहि

1. ससृज्जिरे B; ससृजिरे C,D. 2. ससृजिरे Cp. 3. वैप १,४१४ e अधि द्र.

आगच्छ। मद्र्यग् इति । माम् अञ्चतीति 'ऋत्विग्दधृक्' (पा ३,२,५९) इत्यादिना क्विन्प्रत्ययः। 'प्रत्ययोत्तरपदयोश्च' (पा ७,२,९८) इति अस्मच्छब्दस्यैकवचने मपर्यन्तस्य मादेशः। 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' (पा ६,३,९२) इति टेः अद्रि इत्यादेशः। 'अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम्' (पावा ६,३,९२;९५) इति वचनाद् अद्र्यादेशोऽन्तोदात्तः। यणादेशे 'उदात्तस्वरितयोर्यणः°' (पा ८,२,४) इति यणः स्वरितत्वम्। 'क्विन्प्रत्ययस्य कुः' (पा ८,२,६२) इति कुत्वम्।

सत्तो होता न ऋत्वियस्तिस्तिरे बर्हिरानुषक्। अयुञ्जन् प्रातरद्रयः ॥२॥

सत्तः। होता। नः। ऋत्वियः। तिस्तिरे। बर्हिः। आनुषक्। अयुञ्जन्। प्रातः। अद्रयः ॥

हे इन्द्र नः अस्मदीये यज्ञे होता एतन्नामक ऋत्विक् ऋत्वियः प्राप्तकालः सन्। 'छन्दसि घस्' (पा ५,१,१०६) इति घस्। यणादेशः। प्रत्ययस्वरः। सत्तः निषण्णोऽभूत्। कर्तरि क्तः। सर्वविधीनां छन्दसि विकल्पितत्वाद् निष्ठानत्वाभावः[1]। तथा बर्हिः वेद्याम् आनुषक् अनुषक्तं परस्परसंबद्धं यथा भवति तथा तिस्तिरे स्तीर्णम् अभूत्। स्तृञः कर्मणि लिटि रूपम्। 'ऋत इद्धातोः' (पा ७,१,१००) इति इत्वम्। द्विर्वचनम्। 'शर्पूर्वाः खयः' (७,४,६१) इति तकारस्य शेषः। 'लिटस्तझयोरेशिरेच्' (पा ३,४,८१) इति एश् इत्यादेशः। एवं प्रातः प्रातःसवने अद्रयः ग्रावाणः सोमाभिषवार्थम् अयुञ्जन् संगता अभूवन्।

इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद। वीहि शूर पुरोलाशम्[2] ॥

इमा। ब्रह्म। ब्रह्मऽवाहः। क्रियन्ते। आ। बर्हिः। सीद। वीहि। शूर। पुरोलाशम्[3] ॥

हे ब्रह्मवाहः। ब्रह्मणा मन्त्रेण स्तोत्ररूपेण प्राप्यत इति ब्रह्मवाहाः। तस्य संबोधनम्। तादृश इन्द्र तुभ्यम् इमा इमानि ब्रह्म[4] ब्रह्माणि स्तोत्राणि अस्माभिः क्रियन्ते। अतस्तदर्थं बर्हिः आ सीद उपविश। हे शूर शौर्योपेत इन्द्र आसन्नस्त्वं पुरोलाशम् अस्माभिर्दीयमानं वीहि भक्षय।

रारन्धि सवनेषु ण एषु स्तोमेषु वृत्रहन्। उक्थेष्विन्द्र गिर्वणः ॥ ४ ॥

ररन्धि। सवनेषु। नः। एषु। स्तोमेषु। वृत्रऽहन्। उक्थेषु। इन्द्र। गिर्वणः ॥ ४ ॥

हे गिर्वणः गीर्भिः स्तुतिभिर्वननीय इन्द्र हे वृत्रहन् वृत्रस्य हन्तः हे इन्द्र नः अस्माकं सवनेषु त्रिष्वपि एषु क्रियमाणेषु स्तोमेषु स्तोत्रेषु उक्थेषु शस्त्रेषु च ररन्धि रमस्व। रमतेर्लोटि 'बहुलं छन्दसि' (पा २,४,७६) इति शपः श्लुः।

---

१. नत्वा नास्ति S'. २. पुरोडाशम् C,K^m; पुरोळाशम् K,V, ऋ ३,४१,३. ३. पुरोडाशम् P. ४. ब्रह्मा S'.

'वा छन्दसि' ( पा ३,४,८८ ) इति हेः पित्त्वेन ङित्त्वाभावाद्[1] 'अङितश्च' ( पा ६,४,१०३ ) इति हेर्धिः ।

मृतयः सोमपामुरुं रिहन्ति शवसस्पतिम् । इन्द्रं वृत्सं न मातरः ॥ ५ ॥

मृतयः । सोमऽपाम् । उरुम् । रिहन्ति । शवसः । पतिम् । इन्द्रम् । वृत्सम् । न । मातरः ॥ ५ ॥

मतयः अस्माभिः क्रियमाणाः स्तुतयः । मन ज्ञाने इत्यस्मात् कर्मणि 'मन्त्रे वृष' ( पा ३,३,९६ ) इत्यादिना क्तिन्नुदात्तः । उरुम् महान्तं सोमपाम् सोमस्य पातारं शवसः बलस्य पतिम् स्वामिनम् इन्द्रं रिहन्ति लिहन्ति प्राप्नुवन्ति । तत्र दृष्टान्तः—वत्सं न मातरः यथा वत्सं मातरो गावो लिहन्ति तद्वत् ।

स मन्दस्वा ह्यन्धसो राधसे तुन्वा॑ मुहे । न स्तोतारं निदे करः ॥ ६ ॥

सः । मन्दस्व । हि । अन्धसः । राधसे । तुन्वा॑ । मुहे । न । स्तोतारम् । निदे । करः ॥

हे इन्द्र सः तथाविधस्त्वं तन्वा तव शरीरेण निमित्तेन शरीरबलाय अन्धसः अन्नस्य सोमलक्षणस्य पानेन मन्दस्व हृष्टो भव । मदेर्मोदार्थस्य लोटि रूपम् । नात्र हिशब्दयोगाद् निघातप्रतिषेधः । हेरत्र समुच्चयार्थत्वात् । महे राधसे धनाय प्रभूतधनार्थं च । हर्षणस्य प्रयोजनद्वयम् । हृष्टस्येन्द्रस्य शरीरवृद्धिः हविःप्रदातुर्यजमानस्य धनलाभश्च हि । किं च ते स्तोतारं मां निदे परकृतनिन्दायै । संपदादिलक्षणः क्विप् । आगमानुशासनस्य अनित्यत्वान्नुमभावः । न करः नाकार्षीः । करोतेर्लुङि च्लेरङ् ।

वयमिन्द्र त्वायवो हविष्मन्तो जरामहे । उत त्वमस्मयुर्वसो ॥ ७ ॥

वयम् । इन्द्र । त्वाऽयवः[2] । हविष्मन्तः । जरामहे । उत । त्वम् । अस्मऽयुः । वसो इति ॥

हे इन्द्र त्वायवः त्वां कामयमाना वयं हविष्मन्तः दित्सितेन सोमलक्षणेन हविषा तद्वन्तः सन्तो जरामहे त्वां स्तुमः । त्वायव[3] इति । इच्छार्थे क्यचि मपर्यन्तस्य त्वादेशे 'क्याच्छन्दसि'[4] ( पा ३,२,१७० ) इति उप्रत्यये त्वद्यव इति प्राप्ते 'युष्मदस्मदोरनादेशे' ( पा ७,२,८६ ) इति अविभक्तावपि हलादौ व्यत्ययेन आत्वम् । प्रत्ययस्वरः । उत अपि च हे वसो सर्वस्य वासक इन्द्र त्वम् अस्मयुः अभिमतप्रदानाय अस्मान् कामयिता भव ।

मारे अस्मद् वि मुमुचो हरिप्रियार्वाङ् याहि । इन्द्र स्वधावो मत्स्वेह ॥८॥

मा । आरे । अस्मत् । वि । मुमुचः । हरिऽप्रिय । अर्वाङ् । याहि । इन्द्र । स्वधाऽवः । मत्स्व । इह ॥

---

१. भावा नास्ति S′.    २. त्वायऽवः P,P².    ३. त्वा त्वायव S′.    ४. बहुलं छंदसि S′.

हे हरिप्रिय । हरी एतन्नामानावश्वौ प्रियौ यस्य स तथोक्तः । तस्य संबोधनम् । अस्मत् अस्मत्तः आरे दूरे मा वि मुमुचः । हरिप्रियेत्युक्तत्वाद् रथयुक्तावश्वौ मा विमोचय किं तु रथारूढ एव अर्वाङ् अस्मदभिमुखं याहि आगच्छ । आगत्य च हे स्वधावः हविर्लक्षणेनान्नेन तद्वन् इन्द्र इह अस्मिन् देवयजने मत्स्व सोमपानेन हृष्टो भव । मदि स्तुतीत्यादिषु । अस्य लोटि 'बहुलं छन्दसि' (पा २,४,७३) इति विकरणस्य लुक् । आमन्त्रितस्य अविद्यमानवत्त्वाद् अनिघातः ।

अर्वाञ्चं त्वा सुखे रथे वहतामिन्द्र केशिना । घृतस्नू बर्हिरासदे ॥ ९ ॥

अर्वाञ्चम् । त्वा । सुऽखे । रथे । वहताम् । इन्द्र । केशिना । घृतस्नू इति घृतऽस्नू । बर्हिः । आऽसदे ॥

हे इन्द्र त्वा त्वां सुखे शरीरापीडनेन सुखकरे रथे केशिना केशवन्तौ स्कन्धप्रदेशे लम्बमानकेशयुक्तौ घृतस्नू श्रमजनितस्वेदोदकस्राविणावश्वौ आसदे आसदनीयं बर्हिः अर्वाञ्चम् अभिमुखं वहताम् प्रापयताम् । घृतस्नू इति । घृतोपपदात् ष्णु प्रस्रवणे इत्यस्मात् संपदादिलक्षणः क्विप् । घृतस्य स्नु स्रवणं ययोस्ताविति बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण मध्योदात्तः । आसदे । कृत्यार्थे केन्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरेण नित्स्वरः ।

इति तृतीयेऽनुवाके षष्ठं सूक्तम् ।

'उप नः सुतमा गहि' इति सूक्तस्य अतिरात्र एव मध्यमे रात्रिपर्याये ब्राह्मणाच्छंसिशस्त्रे विनियोग उक्तः ।

उप नः सुतमा गहि सोममिन्द्र गवाशिरम् । हरिभ्यां यस्ते अस्मयुः ॥ १ ॥

उप । नः । सुतम् । आ । गहि । सोमम् । इन्द्र । गोऽआशिरम् । हरिऽभ्याम् । यः । ते । अस्मऽयुः ॥

हे इन्द्र नः अस्मदीयं सुतम् अभिषुतं गवाशिरम् गव्यं पयः आश्रयणसाधनं यस्य तम् । आङ्पूर्वात् श्रीणातेः[1] क्विपि 'अपस्पृधेथाम् आनृचुः' (पा ६,१,३६) इत्यादिना शिर्[2] इत्यादेशः । बहुव्रीहौ पूर्वपदस्वरः । तं सोमं प्रति उपा गहि समीपे आगच्छ । यतः हरिभ्याम् अश्वाभ्यां युक्तः ते तव रथः[3] अस्मयुः अस्मान् कामयमानो वर्तते ।

तमिन्द्र मदमा गहि बर्हिष्ठां ग्रावभिः सुतम् । कुविन्न्वस्य तृप्णवः ॥ २ ॥

तम् । इन्द्र । मदम् । आ । गहि । बर्हिःऽस्थाम् । ग्रावऽभिः । सुतम् । कुवित् । नु । अस्य । तृप्णवः ॥

हे इन्द्र तं प्रसिद्धं मदम् मदकरं बर्हिष्ठाम् बर्हिषि स्थितं ग्रावभिः पाषाणैः सुतम् अभिषुतं सोमम् अभिलक्ष्य आ गहि आगच्छ । नु क्षिप्रम् अस्य सोमस्य

---

१. शृणोतेः S'. २. शिर S'. ३. यो रथः S'.

पानेन कुवित् । बहुनामैतत् । प्रभूतं यथा भवति तथा तृण्णवः तृप्तो भव। तृप प्रीणने इत्यस्य लेटि अडागमः । व्यत्ययेन श्नुविकरणः ।

'इन्द्र॑मि॒त्था गिरो॒ ममाच्छा॑गुरिषि॒ता इ॒तः । आ॒वृते॒ सोम॑पीतये ॥ ३ ॥'[1]

इन्द्र॑म् । इ॒त्था । गिर॑ः । मम॑ । अच्छ॑ । अ॒गुः॒ । इ॒षि॒ताः । इ॒तः । आ॒ऽवृते॑ । सोम॑ऽपीतये ॥ ३ ॥

'इन्द्रम् अच्छ इन्द्रम् अभिलक्ष्य मम गिरः' स्तुतिरूपा वाचः इषिताः अस्माभिः प्रेरिताः सत्यः इतः अस्माद् देवयजनसकाशाद् इत्था इत्थम् उच्चार्यमाणप्रकारेण अगुः प्राप्ताः । इदम्शब्दात् 'था हेतौ च च्छन्दसि' ( पा ५,३,२६ ) इति व्यत्ययेन थाप्रत्ययः । इदम 'एतेतौ रथोः' ( पा ५,३,४ ) इति इत् इत्यादेशः । प्रत्ययस्वरः । किमर्थम् । आवृते आवर्तनाय अस्मद्यज्ञं प्रति आगमनाय। वृतु वर्तने । अस्य संपदादिलक्षणः क्विप् । गतिसमासः । कृदुत्तरपदप्रकृतिस्वरः । आवृत्तिरपि किमर्थेति तत्राह — सोमपीतये सोमपानाय ।

इन्द्रं॒ सोम॑स्य पी॒तये॒ स्तोमै॑रि॒ह ह॑वामहे । उ॒क्थेभि॑ः कु॒वि॒दा॒गम॑त् ॥ ४ ॥

इन्द्र॑म् । सोम॑स्य । पी॒तये॑ । स्तोमै॑ः । इ॒ह । ह॒वा॒म॒हे॒ । उ॒क्थेभि॑ः । कु॒वित् । आ॒ऽगम॑त् ॥ ४ ॥

इन्द्रं देवं सोमस्य पीतये पानाय इह अस्मिन् यज्ञे स्तोमैः त्रिवृत्पञ्चदशादिस्तोमसाध्यैः स्तोत्रैः उक्थेभिः उक्थैः आज्यप्रउगादिशस्त्रसाध्याभिः स्तुतिभिश्च हवामहे आह्वयामः । स च आहूत इन्द्रः कुवित् बहुवारम् आगमत् अस्मद्यज्ञं प्रति आगच्छतु। गमेर्लेटि अडागमः । कुविद्योगाद् अनिघातः । 'आगमा अनुदात्ताः' ( पाम ३,१,३ ) इति अटोऽनुदात्तत्वाद् धातुस्वरः । 'तिङि चोदात्तवति' ( पा ८,१,७१ ) इति गतेर्निघातः ।

इन्द्र॒ सोमा॑ः सु॒ता इ॒मे तान् द॑धिष्व शतक्रतो । ज॒ठरे॑ वाजिनीवसो ॥ ५ ॥

इन्द्र॑ । सोमा॑ः । सु॒ताः । इ॒मे । तान् । द॒धि॒ष्व॒ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । ज॒ठरे॑ । वा॒जि॒नी॒व॒सो॒ इति॑ वाजिनीऽवसो ॥ ५ ॥

हे इन्द्र इमे ग्रहचमससंस्थिताः सोमाः सुताः त्वदर्थम् अभिषवादिना संस्कृताः हे शतक्रतो बहुकर्मन् हे वाजिनीवसो अन्नधन । यद्वा वाजः अन्नं फलरूपम् आस्विति वाजिन्यः[2] क्रियास्तासां वासक इन्द्र । वाजशब्दान्मत्वर्थीय इनिः । 'ऋन्नेभ्यो ङीप्' ( पा ४,१,५ ) इति ङीप् । तासां वसो । 'संबुद्धौ च' ( पा ७, ३,१०६ ) इति गुणः । तान् त्वदर्थम् अभिषुतान् सोमान् जठरे दधिष्व धारय ।

वि॒द्मा हि त्वा॑ धनंज॒यं वाजे॑षु दधृ॒षं क॑वे । अधा॑ ते सु॒म्नमी॑महे ॥ ६ ॥

---

१. नास्ति S'.  २. वाजिनः S'.

विद्म । हि । त्वा । धनम्ऽजयम् । वाजेषु । दधृषम् । कवे । अध । ते । सुम्नम् । ईमहे ॥

हे कवे क्रान्तप्रज्ञ इन्द्र त्वा त्वां वाजेषु संग्रामेषु दधृषम् अतिशयेन शत्रुधर्षकं धनंजयम् शत्रुधनस्य जेतारं विद्म जानीमः । अध अतः कारणात् ते तव सुम्नम् सुखं सुखकरं धनं वा ईमहे याचामहे । धनंजयम् इति । जि जये इत्यस्माद् धने उपपदे 'संज्ञायां भृतॄवृजि०' ( पा ३,२,४६ ) इति खच् । 'अरुर्द्विषदजन्तस्य मुम्' ( पा ६,३,६७ ) इति मुम् आगमः । दधृषम् इति । धृषेर्यङ्लुगन्तात् पचाद्यचि 'यङोऽचि च' ( पा २,४,७४ ) इति यङो लुक् । लघूपधगुणे प्राप्ते 'न धातुलोपे॰' ( पा १,१,४ ) इति तस्य प्रतिषेधः ।

इममिन्द्र गवाशिरं यवाशिरं च नः पिब । आगत्या वृषभिः सुतम् ॥ ७ ॥

इमम् । इन्द्र । गोऽआशिरम् । यवऽआशिरम् । च । नः । पिब । आऽगत्य । वृषऽभिः । सुतम् ॥

हे इन्द्र गवाशिरम् । विकारे प्रकृतिशब्दः । गव्याख्याशीर्द्रव्योपेतं[1] तथा यवाशिरं च यवलक्षणमिश्रणद्रव्योपेतं वृषभिः वर्षकैर्ग्रावभिः सुतं नः अस्मदीयम् इमं सोमम् आगत्य अस्मदभिमुखं प्राप्य पिब पानं कुरु । गवाशिरं यवाशिरम् इत्युभयत्र आङ्पूर्वस्य श्रीणातेः क्विपि 'अपस्पृधेथामानृचुः' ( पा ६,१,३६ ) इत्यादिना शिर् इत्यादेशः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ।

तुभ्येदिन्द्र स्व ओक्ये३ सोमं चोदामि पीतये । एष रारन्तु ते हृदि ॥८॥

तुभ्य । इत् । इन्द्र । स्वे । ओक्ये । सोमम् । चोदामि । पीतये । एषः । ररन्तु । ते । हृदि ॥

हे इन्द्र तुभ्य इत् तुभ्यमेव । 'सुपां सुलुक्०' ( पा ७,१,३९ ) इति सुपो लुक् । पीतये पानार्थं स्वे स्वीये ओक्ये ओकसि स्थाने जठरे । वस्वादित्वात् (द्र. पाका ५,४,२५) स्वार्थिको यत् । सोमं पीतये पानाय चोदामि प्रेरयामि । स एष पीतः सोमः ते तव हृदि हृदये ररन्तु अत्यर्थं रमताम् । रमु क्रीडायाम् इत्यस्य यङ्लुकि लोटि सर्वविधीनां छन्दसि विकल्पितत्वाद् अभ्यासस्य नुगभावः । संहितायाम् 'अन्येषामपि दृश्यते' ( पा ६,३,१३७ ) इति अभ्यासस्य दीर्घः ।

त्वां सुतस्य पीतये प्रत्नमिन्द्र हवामहे । कुशिकासो अवस्यवः ॥ ९ ॥

त्वाम् । सुतस्य । पीतये । प्रत्नम् । इन्द्र । हवामहे । कुशिकासः । अवस्यवः ॥ ९ ॥

---

1. 'शिरद्र॰' S'.

हे इन्द्र प्रत्नम् पुरातनं त्वां सुतस्य अभिषुतस्य सोमस्य पीतये पानाय कुशिकासः कुशिकगोत्रोत्पन्ना वयम् अवस्यवः रक्षाकामाः सन्तो हवामहे आह्वयामः। कुशिकासो अवस्यव इत्यत्र संहितायाम् 'अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च' (पा ६,१,११६) इति पदः प्रकृतिभावः।

इति तृतीयेऽनुवाके सप्तमं सूक्तम्।

'अश्वावति प्रथमः' इति सूक्तस्य अतिरात्रे क्रतौ मध्यमे रात्रिपर्याये ब्राह्मणाच्छंसिशस्त्रे विनियोग उक्तः। अस्यान्तिमा 'बर्हिर्वा यत्' (६) इत्येषा परिधानीया।

अश्वा॑वति प्रथ॒मो गोषु॑ गच्छति सुप्रा॒वीरि॑न्द्र॒ मर्त्य॒स्तवो॒तिभि॑ः।
तमित् पृ॑णक्षि॒ वसु॑ना॒ भवी॑यसा॒ सिन्धु॒माप॒ो यथा॒भितो॒ विचे॑तसः ॥ १ ॥

अश्व॑ऽवति। प्र॒थमः। गोषु॑। गच्छ॒ति। सु॒प्र॒ऽअ॒वीः। इन्द्र॒। मर्त्यः॑। तव॑। ऊ॒तिऽभिः॑।
तम्। इत्। पृ॒ण॒क्षि॒। वसु॑ना। भवी॑यसा। सिन्धु॑म्। आप॑ः। यथा॑। अ॒भितः॑। विऽचे॑तसः॥

हे इन्द्र यो मर्त्यः तवोतिभिः रक्षाभिः सुप्रावीः सुष्ठु रक्षितो भवति स मर्त्यः अश्वावति बहुभिरश्वैस्तद्वति युद्धे यद्वा बह्वश्वोपेते जने। बह्वश्ववत्सु इत्यर्थः। तेषु प्रथमः मुख्यः सन् गच्छति मुख्यो भवति। तथा गोषु गोमत्सु प्रथमो गच्छति। बहुपशुको भवतीत्यर्थः। त्वमपि भवीयसा बहुतरेण भवितृतमेन वा। बहुभावं प्राप्नुवता। भवितृशब्दात्[1] 'तुश्छन्दसि' (पा ५,३,५९) इति ईयसुन्। तुरिष्ठेमेयःसु' (पा ६,४,१५४) इति तृलोपः। वसुना धनेन अभितः तमित् तमेव पुरुषं पृणक्षि संपृक्तं करोषि। पृची संपर्के। रौधादिकः। तत्र दृष्टान्तः—यथा विचेतसः विशिष्टज्ञानसाधना आपः अभितः सिन्धुम् समुद्रं पूरयन्ति तद्वत्।

आपो॒ न दे॒वीरुप॑ यन्ति हो॒त्रिय॑म॒वः प॑श्यन्ति॒ वित॑तं॒ यथा॒ रजः॑।
प्रा॒चैर्दे॒वास॒ः प्र ण॑यन्ति देव॒युं ब्र॑ह्म॒प्रियं॑ जोषयन्ते व॒रा इ॑व ॥ २ ॥

आप॑ः। न। दे॒वीः। उप॑। य॒न्ति। हो॒त्रिय॑म्। अ॒वः। प॒श्य॒न्ति॒। विऽत॑तम्। यथा॑।
रज॑ः। प्रा॒चैः। दे॒वास॑ः। प्र। न॒य॒न्ति॒। दे॒व॒ऽयुम्। ब्र॒ह्म॒ऽप्रिय॑म्। जो॒ष॒य॒न्ते॒। व॒राःऽइ॑व॥

हे इन्द्र होत्रियम् होत्राई त्वाम् आपो न देवीः द्योतमाना आपो यथा उप यन्ति उपगच्छन्ति निम्नं प्रदेशं समुद्रादिकं वा एवम् उप यन्ति त्वाम् उपगच्छन्ति। सामर्थ्यात् स्तुतयः स्तोतारो वेति लभ्यते। तथा अवः पश्यन्ति अवः अवस्तात्

1. भवति° S'.

पश्यन्ति । तव स्वरूपं द्रष्टुम् अशक्ता इत्यर्थः । तत्र दृष्टान्तः — यथा विततम् विस्तृतं रजः । 'ज्योती रज उच्यते' इति निरुक्तम् (४,१९) । सर्वतो व्याप्तं सावित्रं तेजो यथा द्रष्टुम् अशक्ता अवस्तात् पश्यन्ति तद्वत् । किं च देवासः स्तोतार ऋत्विजः त्वां प्राचैः प्राचीनं प्र णयन्ति वेद्यभिमुखं गमयन्ति । यद्वा त्वदर्थं सोमम् अग्निं च प्राञ्चं प्र णयन्ति । ब्रह्मप्रियम् । ब्रह्म परिवृढं स्तोत्रं कर्म वा । तत् प्रियं यस्य स तादृशं त्वां वरा इव यथा वराः कन्या जोषयन्ते एवम् ऋत्विजो जोषयन्ते सेवन्ते ।

अधि द्वयोरदधा उक्थ्यं[1] वचो यतस्रुचा मिथुना या सपर्यतः ।
असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते ॥ ३ ॥

अधि । द्वयोः । अदधाः । उक्थ्यम् । वचः । यतऽस्रुचा । मिथुना । या । सपर्यतः ।
असम्ऽयत्तः । व्रते । ते । क्षेति । पुष्यति । भद्रा । शक्तिः । यजमानाय । सुन्वते ॥ ३ ॥

हे ब्राह्मणाच्छंसिन् द्वयोः हविर्धानयोश्छदिष्मतोः अधि उपरि उक्थ्यम् उक्थं स्तोत्रं तद्योग्यं वचः 'युजे वां ब्रह्म' (अ १८,३,३९) इत्यादिरूपम् उभयोर्मध्यवर्ति तृतीयच्छदिःस्थानीयं वचः वचनम् अध्यदधाः निहितवान् असि । उभे हविर्धाने विशेष्येते — यतस्रुचा यताः संबद्धाः स्रुचः ग्रहचमसादिलक्षणा यज्ञसाधनानि पात्राणि ययोस्ते तादृग्रूपे मिथुना युगलरूपेण वर्तमाने या ये हविर्धाने । सर्वत्र 'सुपां सुलुक्०' (पा ७,१,३९) इति विभक्तेराकारः । तादृशे हविर्धाने सपर्यतः इन्द्रं पूजयतः । सोमपानोचितपात्रधारणद्वारेणेति भावः । तयोरधीति पूर्वत्रान्वयः । किं च हे इन्द्र ते व्रते तव कर्मणि त्वदुद्देश्ये यागे यजमानः असंयत्तः व्यापारान्तरेष्वसंबद्धः सन् क्षेति निवसति पुष्यति आत्मानं प्रजापश्वादिना । सुन्वते त्वदर्थम् अभिषवं कुर्वते यजमानाय । षष्ठ्यर्थे चतुर्थी । तस्य भद्रा कल्याणी शक्तिः बलम् अस्तु । त्वदनुग्रहाद् इति शेषः । अयं मन्त्र ऐतरेयब्राह्मणे व्याख्यातः — " 'अधि द्वयोरदधा उक्थ्यं वचः' इति । द्वयोर्ह्येतत् तृतीयं छदिरधिनिधीयते । 'उक्थ्यं वचः' इति यदाह[1] यज्ञियं वै कर्मोक्थ्यं वचो यज्ञमेवैतेन समर्धयति । 'यतस्रुचा मिथुना या सपर्यतः । असंयत्तो व्रते ते क्षेति पुष्यति' इति । यदेवादः पूर्वं यत्तवत् पदम् आह तदेवैतेन शान्त्या शमयति । 'भद्रा शक्तिर्यजमानाय सुन्वते' इत्याशिषम् आशास्ते" (ऐब्रा १, २९) इति ।

आदङ्गिराः प्रथमं दधिरे वय इद्धाग्नयः शम्या ये सुकृत्यया ।
सर्वं पणेः समविन्दन्त भोजनमश्वावन्तं गोमन्तमा पशुं नरः ॥ ४ ॥

---

1. तदाह S'.

आत् । अङ्गिराः । प्रथमम् । दधिरे । वयः । इद्धऽअग्नयः । शम्या । ये । सुऽकृत्यया । सर्वम् । पणेः । सम् । अविन्दन्त[1] । भोजनम् । अश्वऽवन्तम् । गोऽमन्तम् । आ । पशुम् । नरः ॥

हे इन्द्र अङ्गिराः अङ्गिरसः । 'सुपां सुलुक्' ( पा ७,१,३९ ) इत्यादिना जसः सुः । प्रथमम् अग्रतो वयः हविर्लक्षणम् अन्नम् आत् अनन्तरमेव यदा पणिभिर्गावोऽपहृतास्तदानीमेव दधिरे अधारयन् त्वदर्थं संपादितवन्तः । कीदृशा अङ्गिरसः । ये सुकृत्यया । कृतिः करणं व्यापारः । शोभनव्यापारोपेतेन शम्या । कर्मनामैतत् । कर्मणा अग्निष्टोमादिलक्षणेन निमित्तेन इद्धाग्नयः प्रज्वलिताहवनीयाद्यग्निमन्तस्ते नरः नेतारः अङ्गिरसः पणेः एतन्नामकस्यासुरस्य सर्वम् यद्यद् अपहृतम् आसीत् तत् सर्वं भोजनम् धनं समविन्दन्त समलभन्त । भोजनं विशिनष्टि — अश्वावन्तम् बहुभिरश्वैर्युक्तं गोमन्तम् बह्वीभिर्गोभिर्युक्तम् । आ इति चार्थे । पशुम् आ उक्ताश्वगोव्यतिरिक्तम् अजाव्यादि अन्यत् पशुजातं च समविन्दन्त ।

यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रतपा वेन आजनि ।
आ गा आजदुशना काव्यः सचा यमस्य जातममृतं यजामहे ॥ ५ ॥

यज्ञैः । अथर्वा । प्रथमः । पथः । तते । ततः । सूर्यः । व्रतऽपाः । वेनः । आ । अजनि । आ । गाः । आजत् । उशना । काव्यः । सचा । यमस्य । जातम् । अमृतम् । यजामहे ॥

अथर्वा एतन्नामा महर्षिः यज्ञैः इन्द्रम् उद्दिश्य क्रियमाणैर्यागैः साधनैः प्रथमः सूर्यादिभ्यः पूर्वभूतः सन् पथः अपहृतानां गवां मार्गान् तते विस्तारितवान् । ज्ञातवान् इत्यर्थः । ततः अनन्तरं वेनः कान्तः सूर्यो व्रतपाः गवानयनकर्मणः पालयिता आजनि प्रादुरभूत् । अन्धकाराविष्टानां गवां प्रकाशकोऽभूद् इत्यर्थः । अनन्तरं काव्यः कवेः पुत्र उशना भृगुः सचा इन्द्रसहायभूतः सन् गाः आजत् आभिमुख्येन प्राप्नोत् । यमस्य सर्वनियन्तुः सूर्यस्य प्रयोजनाय जातम् प्रादुर्भूतम् अथवा यमस्य यमात् नियन्तुरीश्वरात् जातम् अमृतम् अमरणधर्माणम् इन्द्रं यजामहे पूजयामः ।

बर्हिर्वा यत् स्वपत्याय वृज्यतेऽर्को वा श्लोकमाघोषते दिवि ।
ग्रावा यत्र वदति कारुरुक्थ्य१स्तस्येदिन्द्रो[2] अभिपित्वेषु रण्यति ॥ ६ ॥

बर्हिः । वा । यत् । सुऽअपत्याय । वृज्यते । अर्कः । वा । श्लोकम् । आऽघोषते । दिवि । ग्रावा । यत्र । वदति । कारुः । उक्थ्यः । तस्य । इत् । इन्द्रः । अभिऽपित्वेषु । रण्यति ॥

यत् यस्य यज्ञस्य संबन्धि बर्हिः स्वपत्याय शोभनापत्याय फलाय यज्ञपात्राणां शोभनायतनाय वा वृज्यते छिद्यते । आस्तीर्यत इत्यर्थः । यच्छब्दयोगाद्

---

१. अविदन्त P; अविंदत Cp. २. °रुक्थ्य१स्त° B,Bh,C,Dc,Cs; °रुक्थ्यस्त° R.

अनिघातः । अर्को वा अर्चनसाधनमन्त्रोपेतो होता च श्लोकम् । वाङ्नामैतत् । वागात्मकं शस्त्रादिकं यत् यत्र दिवि द्योतमाने यज्ञे आघोषते उच्चारयति । अत्रापि यच्छब्दोऽनुवर्तते । तद्योगाद् अनिघातः । यत्र च यज्ञे ग्रावा अभिषवसाधनः पाषाणः कारुरुक्थ्यः । लुप्तोपमम् एतत् । उक्थार्हः स्तोतेव वदति शब्दं करोति । तस्येत् तादृशस्यैव यज्ञस्य अभिपित्वेषु समीपदेशेषु इन्द्रो देवः रण्यति रमते । उक्त-लक्षणो यागः अस्मदर्थं भविष्यतीति हर्षशब्दं करोति वा । रमु क्रीडायाम् । व्यत्ययेन श्यन् परस्मैपदं च । अन्त्यविकारश्छान्दसः । यद्वा रण शब्दार्थः । व्यत्ययेन श्यन् ।

प्रोग्रां पीतिं वृष्णं इयर्मि सत्यां प्रयै सुतस्यं हर्यश्व तुभ्यम् ।
इन्द्र धेनाभिरिह मादयस्व धीभिर्विश्वाभिः शच्यां गृणानः ॥ ७ ॥

प्र । उग्राम् । पीतिम्[1] । वृष्णे । इयर्मि । सत्याम् । प्रऽयै । सुतस्य । हरिऽअश्व । तुभ्यम् ।
इन्द्र । धेनाभिः । इह । मादयस्व । धीभिः । विश्वाभिः । शच्यां । गृणानः ॥ ७ ॥

हे हर्यश्व हरिनामकाश्वोपेत इन्द्र वृष्णे अभिमतफलवर्षित्रे प्रयै प्रकृष्टगमनाय तुभ्यं सुतस्य अभिषुतस्य सोमरसस्य उग्राम् उद्गूर्णबलां सत्याम् अवितथसामर्थ्यां पीतिम् पानं प्रेयर्मि प्रेरयामि । हे इन्द्र त्वं च इह अस्मिन् यज्ञे धेनाभिः प्रीण-यित्रीभिः विश्वाभिः सर्वाभिः धीभिः स्तुतिभिस्तदात्मकैः कर्मभिः । यद्वा धेनेति वाङ्नाम । धीपूर्विकाभिः स्तुतिभिः शच्या । कर्मनामैतत् । कर्मणा यागेन निमित्तेन बलेन वा गृणानः स्तूयमानो मादयस्व हृष्टो भव ।

इति तृतीयेऽनुवाके अष्टमं सूक्तम् ।

'योगेयोगे तवस्तरम्' इति चत्वारि सूक्तानि अतिरात्रे क्रतौ तृतीये रात्रिपर्याये ब्राह्मणाच्छंसिशस्त्रे[2] विनियुक्तानि । तत्र आद्यौ तृचौ स्तोत्रियानुरूपौ । 'उत्तम आरोहोऽसि'[3] इत्यारभ्य सूत्रितं वैताने— "'योगेयोगे तवस्तरम्' ( अ २०,२६,१ ), 'युञ्जन्ति ब्रध्नमरुषम्' ( अ २०,२६,४ ) इति स्तोत्रियानुरूपौ । 'अपाः पूर्वेषाम्' ( अ २०,३२,३ ) इति परिधानीया । 'ऊती शचीवः' ( अ २०,३३,३ ) इति याज्या" ( वैताश्रौ ११,११-१३ ) इति ।

अत्रापि 'ऊर्ध्वं सर्वत्र त्रीणि [4]सूक्तानि । अन्त्यं[4] पच्छः पर्यासः' ( वैताश्रौ २६,६ ) इति सूत्रितत्वाद् 'यदिन्द्राहम्' इत्युत्तरेषां त्रयाणां सूक्तानाम् अत्रैव तृतीयपर्याये ब्रह्मशस्त्रे विनियोग उपपन्नः । अत एव 'प्र ते महे' इति सूक्तस्य अन्तिमा "'अपाः पूर्वेषाम्' ( अ २०,३२,३ ) इत्येषा ऋक् परिधानीया" ( वैताश्रौ २६,१३ ) इति सूत्रितम् ।

---

१. पीतिम् P. २. शस्त्रे नास्ति S'. ३. आरो नास्ति S'. ४. सूक्ता-न्यंतः S'.

योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥ १ ॥

योगेऽयोगे । तवःऽतरम् । वाजेऽवाजे । हवामहे । सखायः । इन्द्रम् । ऊतये ॥ १ ॥

योगेयोगे शत्रुसेनादेः संगमेसंगमे सति तत्तद्यागकर्मणः संप्राप्तौ सत्यां वा । युजिर् योगे । 'हलश्च' (पा ३,३,१२१) इति घञ् । 'चजोः कु घिण्यतोः' (पा ७,३,५२) इति कुत्वम् । आद्युदात्तत्वम् । 'नित्यवीप्सयोः' (पा ८,१,४) इति वीप्सायां द्विर्भावे सति आम्रेडितानुदात्तत्वम् । तवस्तरम् अतिशयेन बलवन्तम् इन्द्रम् । तवस्शब्दात् 'अस्मायामेधा°' (पा ५,२,१२१) इति मत्वर्थीयो विनिः । तस्य छान्दसो लोपः । सखायः सखिभूता वयम् ऊतये रक्षणाय हवामहे आह्वयामः । तथा वाजेवाजे अन्नेऽन्ने यदायदा अन्नं लब्धव्यं भवति तदातदा उक्तमहिमोपेतम् इन्द्रं हवामहे ।

आ घा गमद् यदि श्रवत् सहस्रिणीभिरूतिभिः । वाजेभिरुप नो हवम् ॥ २ ॥

आ । घ । गमत् । यदि । श्रवत् । सहस्रिणीभिः । ऊतिऽभिः । वाजेभिः । उप । नः । हवम् ॥

स इन्द्रः यदि नो हवम् आह्वानं श्रवत श्रृणुयात् । श्रृणोतेर्लेटयडागमः । तर्हि सहस्रिणीभिः सहस्रसंख्यायुक्ताभिः ऊतिभी रक्षाभिः वाजेभिः वाजैरन्नैश्च सह । घेति प्रसिद्धौ । उपा गमत् उपागच्छेदेव । गमेर्लेटयडागमः । 'इतश्च लोपः°' (पा ३,४,९७) इति इकारलोपः । यद्वा छान्दसे लुङि 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' (पा ३,१,५५) इति च्लेः अङ् आदेशः । 'बहुलं छन्दस्यमाङ्योगेपि' (पा ६,४,७५) इति अडभावः ।

अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् । यं ते पूर्वं पिता हुवे ॥ ३ ॥

अनु । प्रत्नस्य । ओकसः । हुवे । तुविऽप्रतिम् । नरम् । यम् । ते । पूर्वम् । पिता । हुवे ॥

हे इन्द्र प्रत्नस्य पुरातनस्य ओकसः स्वर्गाख्यस्य स्थानस्य अधिपतिं तुविप्रतिम् बहूनां योद्धॄणां प्रतिनिधिभूतं नरम् नेतारं त्वाम् अनु आनुलोम्येन हुवे आह्वयामि । यं ते त्वां पूर्वम् पूर्वकाले पिता मदीयस्तातः स्वाभिमतसिद्धये हुवे आहूतवान् । तम् इन्द्रं हुवे इति पूर्वत्र संबन्धः । ह्वेञो लिटि 'बहुलं छन्दसि' (पा ६,१,३४) इति 'संप्रसारणम् । पूर्वरूपत्वम्'[1] । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (पावा ६,१,८) इति द्विर्वचनाभावः । यद्वृत्तयोगाद् अनिघातः । प्रत्ययस्वरः । पूर्वस्य तु पादादित्वात् अनिघातः ।

---

१. °रणपररूपत्वे S'; °रणपरपूर्वत्वे शंपा.

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ ४ ॥

युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि । तस्थुषः । रोचन्ते । रोचना । दिवि ॥

ब्रध्नम् महान्तम् । महन्नामैतत् । अरुषम् आरोचमानं तस्थुषः स्थावरान् परि । एतज्जङ्गमानाम् अपि उपलक्षणम् । स्थावरजङ्गमानाम् उपरि चरन्तम् स्वर्गावस्थान् सूर्यात्मना वा[1] परिचरन्तम् एवंमहानुभावम् इन्द्रं युञ्जन्ति रथे योजयन्ति । अत्र सामर्थ्यात् हरिनामकान् अश्वान् इति गम्यते । रोचना रोचनानि रथयुक्तानाम् अश्वानां रथस्य च रश्मयो दिवि रोचन्ते दीप्यन्ते । अयं मन्त्रः उत्तरमन्त्रे 'युञ्जन्त्यस्य काम्या हरी' इति हर्यो रथयोजनाभिधानात् तदनुसारेण केवलेन्द्रपरतया व्याख्यातः[2] । तदनन्तरमन्त्रे 'केतुं कृण्वन्नकेतवे' ( ६ ) [3]इति केतूपाधिकस्य[3] इन्द्रस्याभिधानात् [4]तदनुसारेणायं सूर्यात्मकेन्द्रपरतयापि[4] व्याख्येयः । ब्रध्नशब्दः सूर्यपर्यायः । बध्नाति नियमयति सर्वं जगद् इति ब्रध्नः सूर्यः । तं रथे युञ्जन्ति हरितोऽश्वाः । अरुषं चरन्तं परि तस्थुष इत्येतत् समानम् । तस्य रोचना रोचनानि रश्मिजालानि दिवि रोचन्त इति । अयं मन्त्रो ब्राह्मणे आदित्याग्निवायुलोकात्मना व्याख्यातः — " 'युञ्जन्ति ब्रध्नम्' इत्याह । असौ वा आदित्यो ब्रध्नः । आदित्यमेवास्मै युनक्ति । 'अरुषम्' इत्याह । अग्निर्वा अरुषः । अग्निमेवास्मै युनक्ति । 'चरन्तम्' इत्याह । वायुर्वै चरन् । वायुमेवास्मै युनक्ति । 'परि तस्थुषः' इत्याह । इमे वै लोकाः परि तस्थुषः । इमान् एवास्मै लोकान् युनक्ति । 'रोचन्ते रोचना दिवि' इत्याह । नक्षत्राणि वै रोचना दिवि । नक्षत्राण्येवास्मै रोचयति" ( तैब्रा ३,९,४,१;२ ) इति ।

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥ ५ ॥

युञ्जन्ति । अस्य । काम्या । हरी इति । विऽपक्षसा । रथे । शोणा । धृष्णू इति । नृऽवाहसा ॥ ५ ॥

अस्य उक्तलक्षणेन्द्रस्य रथे हरी एतन्नामानावश्वौ युञ्जन्ति रथे योजयन्ति सारथयः । कीदृशौ । काम्या काम्यौ कामयितव्यौ विपक्षसा विविधे पक्षसी स्वीये रथसंबन्धिनी वा ययोस्तौ तादृशौ रथोभयपार्श्वस्थिताविव्यर्थः । शोणा रक्तवर्णौ धृष्णू धर्षकौ नृवाहसा नृणां सारथिप्रभृतीनां वोढारौ ।

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ६ ॥

केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे । सम् । उषत्ऽभिः । अजायथाः ।

हे मर्याः मरणधर्माणो मनुष्याः । अमुं सूर्यात्मकम् इन्द्रं पश्यतेति शेषः । अकेतवे प्रज्ञानरहिताय जनाय केतुम् प्रज्ञानं कृण्वन् कुर्वन् तथा अपेशसे अन्ध-

१. वा सर्वेषाम् S'. २. °तं S'. ३. इति केतू नास्ति, स्थानं तु षण्णां वर्णानां रिक्तम् S', ४. °णायमपि सूर्यात्मकेंद्रपरतया S',

कारावृतत्वेन रूपरहिताय पदार्थाय पेशः रूपं कृण्वन् उषद्भिः ओषकै रश्मिभिः उषोभिर्वा सह सम् अजायथाः । व्यत्ययेन मध्यमः पुरुषः । समजायत संभूतः । एवं सूर्यात्मना संभूतम् हे मर्याः पश्यतेत्यर्थः ।

इति तृतीयेऽनुवाके नवमं सूक्तम् ।

'यदिन्द्राहम्' इति सूक्तस्य अतिरात्रे तृतीये पर्याये ब्राह्मणाच्छंसिनः शस्त्रे विनियोग उक्तः ।

यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् । स्तोता मे गोषखा स्यात् ॥ १ ॥

यत् । इन्द्र । अहम् । यथा । त्वम् । ईशीय । वस्वः । एकः । इत् । स्तोता । मे । गोऽसखा । स्यात् ॥

हे इन्द्र परमैश्वर्ययुक्त यथा त्वम् एक इत् देवानां मध्ये एक एव वस्वः वासकस्य धनस्य ईशिषे तथा यत् यदि अहम् अपि एक इत् एक एव वस्वः वसुनो धनस्य ईशीय ईश्वरः स्याम् तर्हि यथा तव स्तोता गोषखा स्याद् एवं मे मम स्तोता अपि गोषखा स्यात् । बह्वीनां गवां स्वामी भवेत् । उपलक्षणम् एतत् । सर्वैश्वर्ययुक्तो भवेदित्यर्थः । तस्मात् तव स्तोतारं मां त्वत्सदृशं[1] कुर्वित्यभिप्रायः । गोषखेत्यत्र सुषामादित्वात् षत्वम् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरेण आद्युदात्तः ।

शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे । यदहं गोपतिः स्याम् ॥ २ ॥

शिक्षेयम् । अस्मै । दित्सेयम् । शचीऽपते । मनीषिणे । यत् । अहम् । गोऽपतिः । स्याम् ॥

हे शचीपते इन्द्र अस्मै मनीषिणे मनस ईशित्रे स्तोत्रे दित्सेयम् दानानि दातुम् इच्छेयम् । दा दाने । सन् । 'सनि मीमा' ( पा ७,४,५४ ) इत्यादिना इस्भावः । 'अत्र लोपोऽभ्यासस्य' ( पा ७,४,५८ ) इति अभ्यासलोपः । 'सः स्यार्धधातुके' ( पा ७,४,४९ ) इति सकारस्य तत्वम् । वाक्यभेदाद् अनिघातः । तथा । शिक्षेयम् अपि प्रार्थितं धनं दद्यां च । शिक्षतिर्दानकर्मा । कदैवं स्याम् इति तत्राह—यत् यदा अहं तव स्तोता त्वदनुग्रहाद् गोपतिः स्यां तदा दित्सेयं शिक्षेयं च । तस्मान्मां तादृक्सामर्थ्यं कुर्विति भावः ।

धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते । गामश्वं पिप्युषी दुहे ॥ ३ ॥

धेनुः । ते । इन्द्र । सूनृता । यजमानाय । सुन्वते । गाम् । अश्वम् । पिप्युषी । दुहे ॥ ३ ॥

हे इन्द्र सूनृता । वाङ्नामैतत् । अस्मदीया प्रियसत्यात्मिका[2] वाक् ते तव धेनुः दोग्ध्री गौर्भूत्वा गोवत् प्रीणयित्री भूत्वा सुन्वते सोमाभिषवं कुर्वते यजमानाय

---

1. त्वत्सदृशं S'. 2. °का रूपा S'.

पिप्युषी **तमेव यजमानं वर्धयित्री सती** गाम् अश्वं **च । उपलक्षणम् एतत् । गवाश्वादिकं सर्वम् अभिलषितं** दुहे **दुग्धे । छान्दसे लिटि** 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (पावा ६,१,८ ) **इति वचनात् द्विर्वचनाभावः । पिप्युषी । स्फायी ओप्यायी वृद्धौ । अस्माल्लिट् ।** 'प्यायः पी', 'लिड्यङोश्च' ( पा ६,१,२८;२९ ) **इति परत्वेन द्विर्वचनात् पूर्वमेव पीभावः । पुनःप्रसङ्गविज्ञानाद् द्विर्वचनम् । अभ्यासस्य ह्रस्वः ।** 'क्वसुश्च' ( पा ३,२,१०७ ) **इति लिटः क्वसुरादेशः ।** 'उगितश्च' (पा ४,१,६ ) **इति ङीपि कृते** 'वसोः संप्रसारणम्' ( पा ६,४,१३१ ) **इति संप्रसारणम् ।** 'आदेशप्रत्यययोः' ( पा ८,३,५९ ) **इति षत्वम् । प्रत्ययस्वरेण मध्योदात्तः ।**

**न ते॑ व॒र्ताऽस्ति॒ राध॑स॒ इन्द्र॑ दे॒वो न मर्त्यः॑ । यद् दित्स॑सि स्तु॒तो म॒घम् ॥४॥**

न । ते॒ । व॒र्ता । अ॒स्ति॒ । राध॑सः । इन्द्र॑ । दे॒वः । न । मर्त्यः॑ । यत् । दित्स॑सि । स्तु॒तः । म॒घम् ॥

हे इन्द्र ते **तव** राधसः **धनस्य** वर्ता **निवारको** न **नास्त्येव । निवारणनिषेधस्य उपयोगसिद्धये निषेध्यान् संभावितान् निर्दिशति** — देवो न मर्त्य **इति । वर्ता देवो नास्ति । वर्ता मर्त्यो मनुष्योपि नास्ति ।** यत् **यदि** स्तुतः **अस्माभिः स्तुतिं प्राप्तः प्रख्यापितगुणः सन्** मघम् **मंहनीयं धनं** दित्ससि **दातुम् इच्छसि । तर्हि वर्ता न कोप्यस्ति ।**

**य॒ज्ञ इन्द्र॑मवर्धय॒द् यद् भूमिं॒ व्यव॑र्तयत् । च॒क्रा॒ण ओ॑प॒शं दि॒वि ॥ ५ ॥**

य॒ज्ञः । इन्द्र॑म् । अ॒व॒र्ध॒य॒त् । यत् । भूमि॑म् । वि । अव॑र्तयत् । च॒क्रा॒णः । ओ॒प॒शम् । दि॒वि ॥

यज्ञः **अस्माभिरनुष्ठीयमानः** इन्द्रं[1] **देवम्** अवर्धयत् **। हविषा स्तुत्या वा अभिवृद्धम् अकरोत् । कदेत्युच्यते**— यत् **यदा** दिवि **अन्तरिक्षे मेघम्** ओपशम् **सर्वत उपशयानं** चक्राणः **कुर्वन्** भूमिं व्यवर्तयत् **विवृत्तां[2] वृष्ट्युदकेन उच्छूनाम् अकरोत् । वृष्टिद्वारा सस्यादिसमृद्धया भूमिं पुष्टाम् अकरोत् तदेति संबन्धः । ओपशम् इति । आङुपपूर्वात् शीङः** 'अन्येष्वपि[3] दृश्यते' ( पा ३,२,१०१ ) **इति डः ।**

**वा॒वृ॒धा॒नस्य॑ ते व॒यं विश्वा॒ धना॑नि जि॒ग्युषः॑ । ऊ॒तिमि॒न्द्रा वृ॑णीमहे ॥६॥**

व॒वृ॒धा॒नस्य॑ । ते॒ । व॒यम् । विश्वा॑ । धना॑नि । जि॒ग्युषः॑ । ऊ॒तिम् । इ॒न्द्र॒ । आ । वृ॒णी॒म॒हे॒ ॥

हे इन्द्र ववृधानस्य **वर्धमानस्य स्तुत्या वर्धमानस्य** विश्वा **विश्वानि** धनानि **शत्रुसंबन्धीनि** जिग्युषः **जितवतः । जि जये । लिड्द्विर्वचने ।** 'सन्लिटोर्जेः'[4] (पा ७,३,५७) **इति कुत्वम् । लिटः क्वसुरादेशः । भसंज्ञायां** 'वसोः संप्रसारणम्' ( पा ६,४,१३१ )

---

१. या इंद्रं S'. २. विवृत्तं S'. ३. अन्येषामपि S'. ४. अभ्यासाच्च S'.

**इति संप्रसारणम् ।** 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' **इति न्यायात् कथं क्वसोः संप्रसारणम् इति चेद्, उकारोच्चारणसामर्थ्याद् यथा वसुग्रहणं सिद्धं तथैव क्वसोरपि ग्रहणम् इष्यते । प्रत्ययस्वरेण मध्योदात्तः । तादृशस्य** ते **तव** ऊतिम् **रक्षाम्** आ वृणीमहे **आभिमुख्येन संभजामहे ।**

**व्य१न्तरिक्षमतिरन्मदे सोमस्य रोचना । इन्द्रो यदभिनद् वलम् ॥१॥**

वि । अन्तरिक्षम् । अतिरत् । मदे । सोमस्य । रोचना । इन्द्रः । यत् । अभिनत् । वलम् ॥

इन्द्रो **देवः** रोचना **रोचमानं दीप्यमानम्** अन्तरिक्षं व्यतिरत् **व्यवर्धयत् । वृष्ट्युदकेन अभिवृद्धम् अकरोत् । कस्मिन् सहाये सतीति उच्यते —** सोमस्य **सोमरसस्य पानेन** मदे **संजाते सति । कदेत्युच्यते —** यत् **यदा इन्द्रो** वलम् **सर्वम् आवृत्य वर्तमानम् एतन्नामकम् असुरम् उक्तलक्षणं मेघं वा** अभिनत् **मदेन व्यदारयत् । तदेत्यन्वयः ।**

**उद्गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः । अर्वाञ्चं नुनुदे वलम् ॥२॥**

उत् । गाः । आजत् । अङ्गिरःऽभ्यः । आविः । कृण्वन् । गुहा । सतीः । अर्वाञ्चम् । नुनुदे । वलम् ॥

**इन्द्रो देवः** अङ्गिरोभ्यः **तेषाम् अर्थाय** गुहा **गुहायां** सतीः **अप्रकाशं विद्यमानाः**[1] । 'गुहेः कन्' ( पाउद ९,१०५ ) **इति कन्प्रत्ययः**[2] । 'सुपां सुलुक्' ( पा ७,१,३९ ) **इत्यादिना ङेराकारः । सतीरिति । अस्तेर्लटः शत्रादेशः ।** 'श्नसोरल्लोपः' ( पा ६,४,१११ ) **इत्यकारलोपः ।** 'उगितश्च' ( पा ४,१,६ ) **इति ङीप् ।** 'वा छन्दसि' ( पा ६,१,१०६ ) **इति प्रतिषेधाभावपक्षे रूपम् ।** 'शतुरनुमो नद्यजादी' ( पा ६,१,१७३ ) **इति ङीम्नद्या उदात्तत्वम् । पूर्वसवर्णदीर्घे एकादेशस्वरः ।** गाः आविष्कृण्वन् **प्रकाशयुक्ताः कुर्वन्** उदाजत् **उदगमयद् बहिर्देशं प्रापयत् । तदर्थं गवाम् अपहर्तारं** वलम् **असुरम्** अर्वाञ्चम् **अवाङ्मुखं** नुनुदे **अपातयत् ।**

**इन्द्रेण रोचना दिवो [3]दृळ्हानि दृंहितानि[3] च । स्थिराणि न पराणुदे ॥ ३ ॥**

इन्द्रेण । रोचना । दिवः । दृळ्हानि । दृंहितानि । च । स्थिराणि । न । पराऽनुदे ॥ ३ ॥

इन्द्रेण **देवेन** दिवः **संबन्धीनि** रोचना **रोचमानानि ग्रहनक्षत्रादीनि** दृढानि[4] **दृढावयवानि बलवन्ति कृतानि तथा** दृंहितानि च **दृढीकृतानि । पूर्वतः स्थौल्यम्**

---

१. °मानाः आविष्कृण्वन् प्रकाशयुक्ताः कुर्वन् उदाजत् उदगाः S'. २. भिदादित्वाद् (पा ३,३,१०४) अङ् । वृषादित्वाद् (पा ६,१,२०३) आद्युदात्तत्वम् इति न्याय्यम्. ३. दृढानि दृंहणानि S; दृळ्हानि ऋ ८,१४,९. ४. वैतु. मंपा.

अपरत्र बलवत्त्वम् इति विवेकः। अत एव स्थिराणि तानि न पराणुदे पराणोद्नीयानि न भवन्ति। न केनापि प्रच्यावयितुं शक्यानीत्यर्थः। परेत्युपसर्गपूर्वात् नुद[1] प्रेरणे इत्यस्मात् कृत्यार्थे केन् प्रत्ययः। 'उपसर्गादसमासेऽपि णोपदेशस्य' (पा ८,४,१४) इति णत्वम्। अस्य णोपदेशत्वं कथम् इति चेत् 'सर्वे[2] नाद्यो णोपदेशाः[3] नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनॄवर्जम्' (पावा ६,१,६५) इति वचनात् णोपदेशत्वं सिद्धम्। प्रत्ययस्य नित्त्वात् कृदुत्तरपदप्रकृतिस्वरेण उत्तरपदाद्युदात्तत्वम्।

अपामूर्मिर्मदन्निव स्तोम इन्द्राजिरायते। वि ते मदा अराजिषुः ॥ ४ ॥

अपाम्। ऊर्मिः। मदन्ऽइव। स्तोमः। इन्द्र। अजिरऽयते। वि। ते। मदाः। अराजिषुः ॥

हे इन्द्र ते स्तोमः त्वद्विषयं स्तोत्रम् अपाम्। अप्शब्देन तदाश्रयभूताः समुद्रादयो लक्ष्यन्ते। तासां मदन्निव वृष्ट्युदकेन हृष्यन्निव। ऊर्मी रसः। स इव अजिरायते। अजिरः क्षिप्रगामी। स इवाचरति। त्वरया त्वां प्रति मुखान्निर्गच्छतीत्यर्थः। यद्वा अपामूर्मिरित्येतावदेव दृष्टान्तवचनं लुप्तेवशब्दकम् मदन्निव स्तोमोऽजिरायते इति दार्ष्टान्तिकाभिधानम्। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। 'अजिरशिशिर' (पाउ १,५३) इत्यादिना किरच्प्रत्ययान्तो निपातितः। स इवाचरतीत्यर्थे 'कर्तुः क्यङ् सलोपश्च' (पा ३,१,११) इति क्यङ्। सनादित्वाद् धातुसंज्ञायां[4] लडादिकार्यम्। 'अकृत्सार्वधातुकयोर्दीर्घः' (पा ७,४,२५) इति अकारस्य दीर्घः। ते तव मदाः सोमपानजनिता व्यराजिषुः विशेषेण राजन्ते दीप्यन्ते।

इति एकादशं सूक्तम्।

'त्वं हि स्तोमवर्धनः' इति सूक्तस्य अतिरात्रे ब्राह्मणाच्छंसिनस्तृतीयपर्याये विनियोगोऽभिहितः।

त्वं हि स्तोमवर्धन इन्द्रास्युक्थवर्धनः। स्तोतॄणामुत भद्रकृत् ॥ १ ॥

त्वम्। हि। स्तोमऽवर्धनः। इन्द्र। असि। उक्थऽवर्धनः। स्तोतॄणाम्। उत। भद्रऽकृत् ॥ १ ॥

हे इन्द्र त्वं खलु स्तोमवर्धनः स्तोमैस्त्रिवृदादिभिर्वर्धनीयः असि तथा उक्थवर्धनः उक्थैर्वर्धनीयश्चासि। स्तोमशब्दोपपदाद् उक्थशब्दोपपदाच्च वर्धतेः 'कृत्यल्युटो बहुलम्' (पा ३,३,११३) इति अर्हार्थे ल्युट्। कृदुत्तरपदप्रकृतिस्वरेण लित्त्वाद् आद्युदात्तत्वम्। उत अपि च त्वं स्तोतॄणां भद्रकृत् भद्रस्य कल्याणस्य कर्ताऽसि।

इन्द्रमित् केशिना हरी सोमपेयाय वक्षतः। उप यज्ञं सुराधसम् ॥ २ ॥

---

१. नुद S'; वैतु. शंपा. णुद. २. अजिरंत्सपारा (? अञ्ज्वन्सपराः) सर्वे S'. ३. नोपदेशा S'. ४. सनाद्यन्तत्वाद्धातुसंज्ञा° S'.

इन्द्र॑म् । इत् । केशिना॑ । हरी इति॑ । सोम॒ऽपेया॑य । वक्षतः॑ । उप॑ । यज्ञम् । सु॒ऽराध॑सम् ॥ २ ॥

केशिना स्कन्धप्रदेशस्थितकेशौ हरी एतन्नामानावश्वौ सुराधसम् शोभनधनफलोपेतम् यज्ञम् अस्मद्यज्ञं प्रति सोमपेयाय सोमपानाय इन्द्रमित् इन्द्रमेव उप वक्षतः उपवहतः । यद्वा यज्ञं सुराधसम् इत्येतद् द्वयम् इन्द्रविशेषणतया योज्यम् । यज्ञं यष्टव्यं सुराधसं शोभनेन धनेन दातव्येन तद्वन्तम् इति तयोरर्थः । तादृशम् इन्द्रं वक्षतः वहताम् । वह धारणे । लेट् । 'सिब्बहुलं लेटि' ( पा ३,१,३४ ) इति सिप् । 'हो ढः' ( पा ८,२,३१ ) इति ढत्वम्[1] । 'षढोः कः सि' ( पा ८,२,४१ ) इति कत्वम् । 'आदेशप्रत्यययोः' ( पा ८,३,५९ ) इति षत्वम् । निघातः ।

अ॒पां फेने॑न॒ नमु॑चेः॒ शिर॑ इन्द्रोद॑वर्तयः । विश्वा॒ यदज॑य॒ स्पृधः॑ ॥ ३ ॥

अ॒पाम् । फेने॑न । नमु॑चेः । शिरः॑ । इन्द्र॒ । उत् । अव॑र्तयः । विश्वाः॑ । यत् । अज॑यः । स्पृधः॑ ॥

पुरा किलेन्द्रः असुरान् जित्वा नमुचिम् असुरं ग्रहीतुं न शशाक । स चेन्द्रो युद्धे तेनासुरेण गृहीतोऽभूत् । स चासुरः इन्द्रम् एवम् उवाच — त्वां विसृजामि । त्वं मां रात्रावहनि च काले शुष्केण आर्द्रेण च साधनेन मा[2] हिंसीरिति । एवं समयं कृत्वा इन्द्रं विससर्ज । स च विसृष्टः सन् अहोरात्रयोः संधौ शुष्कार्द्रविलक्षणेन अपां फेनेन नमुचेः शिरश्चिच्छेद । अयम् अर्थः अध्वर्युब्राह्मणे प्रपञ्चितः 'इन्द्रो वृत्रं हत्वा असुरान् पराभाव्य नमुचिम् आसुरम् नालभत' ( तैब्रा १,७,१,६ ) इत्यादिना । सोऽर्थः अनेन मन्त्रेणाभिधीयते — हे इन्द्र त्वम् अपां फेनेन वज्रीभूतेन नमुचेः एतन्नामकस्यासुरस्य । न मुञ्चतीति नमुचिः । 'नभ्राण्नपात्' ( पा ६,३,७५ ) इत्यादिना नञः प्रकृतिभावः । शिर उदवर्तयः शरीराद् उद्गतम् अकार्षीः । अच्छैत्सीरित्यर्थः[3] । कदैवम् इत्युच्यते — यत् यदा विश्वाः सर्वाः स्पृधः स्पर्धमाना असुरसेना अजयः जितवान् असि । स्पर्धन्त[4] इति स्पृधः । 'अन्येभ्योऽपि दृश्यते' ( पा ३,२,१७८ ) इति क्विप् । दृशिग्रहणात् संप्रसारणं रेफस्य ऋकारः अकारलोपश्च । धातुस्वरेण आद्युदात्तः ।

मा॒याभि॑रु॒त्सिसृ॑प्सत॒ इन्द्र॒ द्याम॒रुरु॑क्षतः । अव॒ दस्यूँ॑रधूनुथाः ॥ ४ ॥

मा॒याभिः॑ । उ॒त्ऽसिसृ॑प्सतः । इन्द्र॑ । द्याम् । आ॒ऽरुरु॑क्षतः । अव॑ । दस्यू॑न् । अ॒धू॒नु॒थाः॒ ॥ ४ ॥

हे इन्द्र त्वं मायाभिः आत्मीयाभिर्वञ्चनाभिः[5] उत्सिसृप्सतः उत्सर्पणेच्छून् उद्गमनेच्छून् असुरान् । सृप्लृ गतौ । इच्छार्थे सन् । 'सन्यङोः' ( पा ६,१,९ ) इति द्विर्वचनम् । उरदत्वम् । 'सन्यतः' ( पा ७,४,७९ ) इति इत्त्वम् । सन्नन्ताल्लट् ।

---

1. षत्वम् S'.　　2. मां मा S'.　　3. °सीदित्यर्थः S'.　　4. स्पर्धेत S'.
5. °वचनाभिः S'.

तस्य शत्रादेशः । कृदुत्तरपदप्रकृतिस्वरेण 'अभ्यस्तानाम् आदिः' (पा ६,१,१८९) इति आद्युदात्तत्वम् । तान् उत्सिसृप्सून् याम् आरुरुक्षतः आरुरुक्षूंश्च दस्यून् हे इन्द्र त्वम् अवाधूनुथाः अवाङ्मुखम् अपातयः ।

असुन्वामिन्द्र संसदं विषूचीं व्यनाशयः । सोमपा उत्तरो भवन् ॥ ५ ॥

असुन्वाम् । इन्द्र । सम्ऽसदम् । विषूचीम् । वि । अनाशयः । सोमऽपाः । उत्ऽतरः । भवन् ॥

हे इन्द्र सोमपाः सोमस्य पाता त्वम् उत्तरो भवन् सोमपानजनितबलेन उत्तरः उत्कृष्टतरो भवन् असुन्वाम् सोमाभिषवहीनां संसदम् अयष्टृसभां विषूचीम् विष्वगञ्चनां[1] कृत्वा व्यनाशयः विशेषेण नष्टाम् अकरोः । असुन्वाम् इति । षुञ् अभिषवे । लटः शानच् । स्वादिभ्यः श्नुः । ततष्टाप् । अमि कृते नकारलोपश्छान्दसः । नञ्समासे बहुव्रीहौ 'नञ्सुभ्याम्' (पा ६,२,१७२) इति उत्तरपदान्तोदात्तत्वम् । अथ वा अस्मादेव धातोः 'सुवः कित्' (पाउ ३,३५) इति नुप्रत्ययः किद्वद्भावश्च । न विद्यते सुनुः अभिषवो यस्याः सेति असुनुः । 'सुपां सुपो भवन्ति' (पावा ७,१,३९) इति अमो ङिरादेशः । 'ङिति ह्रस्वश्च' (पा १,४,६) इति विकल्पेन नदीसंज्ञायां ङेरामादेशः[2] । आडागमादि । पूर्वोक्त एव स्वरः ।

इति तृतीयेऽनुवाके एकादशं सूक्तम् ।

'प्र ते महे विदथे' इति सूक्तस्य अतिरात्रे ब्राह्मणाच्छंसिनस्तृतीयपर्यायशस्त्रे विनियोगोऽभिहितः । अस्यान्तिमा 'अपाः पूर्वेषाम्' (अ २०,३२,३) इत्येषा ऋक् परिधानीया ।

प्र ते महे विदथे शंसिषं हरी प्र ते वन्वे वनुषो हर्यतं मदम् ।
घृतं न यो हरिभिश्चारु सेचत आ त्वा विशन्तु हरिवर्पसं गिरः ॥ १ ॥

प्र । ते । महे । विदथे । शंसिषम् । हरी इति । प्र । ते । वन्वे । वनुषः । हर्यतम् । मदम् । घृतम् । न । यः । हरिऽभिः । चारु । सेचते । आ । त्वा । विशन्तु । हरिऽवर्पसम् । गिरः ॥

हे इन्द्र महे महति विदथे । विद्यते कर्तव्यतया ज्ञायत इति विदथो यज्ञः । तस्मिन् ते तव हरी एतन्नामानावश्वौ तव शीघ्रागमनाय प्र शंसिषम् प्रास्ताविषम् । शंसु स्तुतौ । लुङि 'च्लेः सिच्' (पा ३,१,४४) । अडभावश्छान्दसः । तथा वनुषः शत्रुहिंसकस्य याच्यमानस्य वा ते तव हर्यतम् कमनीयं मदम् सोमपानजनितं प्र वन्वे प्रयाचे । अस्मदभिमतम् इति शेषः । वनु याचने । तनादित्वाद् उप्रत्ययः । य इन्द्रो घृतं न घृतं यथा अग्नौ होमार्थं सिञ्चन्ति एवं [3]हरिभिः हरितवर्णैरश्वैः सहागत्य चारु रमणीयं धनं सेचते वर्षयति[3] । तं तादृशं हरिवर्पसम् । वर्प इति

1. विश्वगंचनां S'. 2. ङेरमा° S'. 3. हरिसिंचंति S'.

रूपनाम। हरितरूपं त्वा त्वां गिरः अस्मदीयाः स्तुतिवाचः आ विशन्तु प्रविशन्तु तव बुद्धौ संगता भवन्तु।

हरिं हि योनिमभि ये समस्वरन् हिन्वन्तो हरी दिव्यं यथा सदः।
आ यं पृणन्ति हरिभिर्न धेनव इन्द्राय शूषं हरिवन्तमर्चत ॥ २ ॥

हरिम्। हि। योनिम्। अभि। ये। सम्ऽअस्वरन्। हिन्वन्तः। हरी इति। दिव्यम्। यथा। सदः। आ। यम्। पृणन्ति। हरिऽभिः। न। धेनवः। इन्द्राय। शूषम्। हरिऽवन्तम्। अर्चत ॥ २ ॥

ये पूर्वमहर्षयो हरिम् हरणशीलं हरिवर्पसम् इत्युक्तत्वात् हरितवर्णं वा योनिम् सर्वेषां मूलकारणम् इन्द्रं समस्वरन् हि समस्तुवन् खलु। स्वृ शब्दोपतापयोः। 'हि च' (पा ८,१,३४) इति निघातप्रतिषेधः। किं कुर्वन्तः। दिव्यम् देवसंबन्धि सदः सीदन्त्यत्र देवा इति सदो यागगृहम्। तद् यथा येन प्रकारेण इन्द्रो गच्छति तथा हरी एतन्नामानावश्वौ हिन्वन्तः प्रेरयन्तः रथे योजयन्तः। यं च इन्द्रं न धेनवः। अत्र पुरस्तादुपाचारोऽपि नशब्द उपमार्थीयः। धेनवो नवप्रसूतिका गावो यथा स्वस्वामिनं क्षीरादिभिः पृणन्ति पूरयन्ति एवं हरिभिः हरितवर्णैः सोमरसैः आ पृणन्ति पूरयन्ति यजमानास्तस्मै इन्द्राय। द्वितीयार्थे चतुर्थी। तम् इन्द्रं शूषम् शत्रुशोषणसाधनबलोपेतं हरिवन्तम् हरिभिस्तद्वन्तम् अर्चत पूजयत। हे ऋत्विज इति शेषः। यद्वा इन्द्राय इन्द्रस्य हरिवन्तं शूषम् प्रीणनसाधनं बलम् अर्चतेति व्याख्येयम्। शुषिः प्रीणनार्थ इति माधवः।

सो अस्य वज्रो हरितो य आयसो हरिर्निकामो हरिरा गभस्त्योः।
द्युम्नी सुशिप्रो हरिमन्युसायक इन्द्रे नि रूपा हरिता मिमिक्षिरे ॥ ३ ॥

सः। अस्य। वज्रः। हरितः। यः। आयसः। हरिः। निऽकामः। हरिः। आ। गभस्त्योः। द्युम्नी। सुऽशिप्रः। हरिमन्युऽसायकः। इन्द्रे। नि। रूपा। हरिता। मिमिक्षिरे ॥ ३ ॥

य आयसः अयोविकारो लोहमयो यो वज्रोऽस्ति अस्य इन्द्रस्य स वज्रः हरितः हरितवर्णः। लोहमयत्वादेव। स निकामः नितरां कमनीयः। इन्द्रोऽपि हरिः हरितवर्णः। स हरिः उक्तरूप इन्द्रः गभस्त्योः। गभस्तिर्हस्तः। हस्तयोस्तं हरितं वज्रम् आ। दत्त इति शेषः। धारयतीत्यर्थः। किं च इन्द्रः द्युम्नी द्युम्नवान् अन्नवान् धनवान् वा। सुशिप्रः। 'शिप्रे हनू नासिके वा' इति निरुक्तम् (६,१७)। शोभनहनुः शोभननासिको वा। स इन्द्रः हरिमन्युसायकः हरणशीलमन्युलक्षणसायकोपेतः हरितवर्णमननीयबाणोपेतो वा। हरयो मन्यवः सायकाश्च यस्येति वा व्याख्येयम्। किं बहुना। यानियानि रूपा रूपाणि निरूपणीयानि आभरणा-

दीनि सन्ति तानि सर्वाण्यपि हरिता हरितानि हरितवर्णान्येव नि मिमिक्षिरे नियोजयितुम् इष्टानि बभूवुः । मिहेः सन्नन्तात् कर्मणि लिटि रूपम् ।

दिवि न केतुरधि धायि हर्यतो विव्यचद् वज्रो हरितो न रंह्या ।
तुददहिं हरिशिप्रो य आयसः सहस्रशोका अभवद्धरिंभरः ॥ ४ ॥

दिवि । न । केतुः । अधि । धायि । हर्यतः । विव्यचत् । वज्रः । हरितः । न । रंह्या ।
तुदत् । अहिम् । हरिऽशिप्रः । यः । आयसः । सहस्रऽशोकाः । अभवत् । हरिम्ऽभरः ॥४॥

वज्रः इन्द्रसंबन्धी दिवि अन्तरिक्षे केतुर्न केतुरिव प्रज्ञापक आदित्य इव वा हर्यतः कान्तः सन् अधि धायि अध्यधायि निहित आसीत् । दधातेः कर्मणि लुङ् । चिणि युगागमः । अडभावश्छान्दसः । किं च स वज्रः हरितो न हरितवर्णा आदित्याश्वा इव ते यथा रंह्या रंहणीयानि प्रति । अथवा रंह्या वेगेन व्याप्नुवन्ति तद्वद् विव्यचत् विशेषेण व्याप्नोति सर्वम् । यद्वा नेति चार्थे । रंह्याणि स्थानानि प्रति हरितः हरितवर्णो वज्रः विव्यचत् व्याप्नोति च । अपिच य आयसो हरितवर्णो वज्रोऽस्ति तेन वज्रेण हरिशिप्रः सोमपानेन हरितवर्णशिप्र इन्द्रः अहिम् वृत्रं तुदत् अतुदद् व्यथितम् अकरोत् । किं च हरिंभरः हर्योरश्वयोर्भर्ता । हरिशब्दोपपदाद् भृञः 'संज्ञायां भृतॄवृजि' (पा ३,२,४६) इत्यादिना खच् । मुमागमः । इन्द्रः तेन वज्रेण साधनेन सहस्रशोकाः सहस्रशोकः सहस्रसंख्याकानां शत्रूणां शोचयिता अभवत् । यद्वा अपरिमितदीप्तिरभवत् ।

त्वंत्वमहर्यथा उपस्तुतः पूर्वेभिरिन्द्र हरिकेश यज्वभिः ।
त्वं हर्यसि तव विश्वमुक्थ्य१मसामि राधो हरिजात हर्यतम् ॥ ५ ॥

त्वम्ऽत्वम् । अहर्यथाः । उपऽस्तुतः । पूर्वेभिः । इन्द्र । हरिऽकेश । यज्वऽभिः ।
त्वम् । हर्यसि । तव । विश्वम् । उक्थ्यम् । असामि । राधः । हरिऽजात । हर्यतम् ॥५॥

हे हरिकेश हरिद्वर्णकेशोपेत उक्तवर्णकेशोपेतैरश्वैरुपेत वा हे इन्द्र त्वंत्वम् त्वमेव यत्रयत्र सोमादिहविरस्ति[1] तत्र सर्वत्र त्वमेव । 'नित्यवीप्सयोः (पा ८,१,४) इति वीप्सायां द्विर्वचनम् । आम्रेडितस्य अनुदात्तत्वाद् आद्युदात्तः । पूर्वेभिः पूर्वभवैः यज्वभिः यजमानैः उपस्तुतः सन् अहर्यथाः अकामयथाः । सामर्थ्यात् सोमादिकम् इति गम्यते । तथा इदानीमपि त्वम् त्वमेव हर्यसि कामयसे हवींषि । अतः हे हरिजात हरिभ्याम् अश्वाभ्यां सह यज्ञे प्रादुर्भूत हरितवर्णत्वेन प्रादुर्भूत वा विश्वम् सर्वं सोमादिकम् उक्थ्यम् प्रशस्यम् असामि अनल्पं हर्यतम् कमनीयं राधः अन्नम् सोमादिरूपं तव तवैव ।

---

1. °हविरस्ति S.

ता वज्रिणं मन्दिनं स्तोम्यं मद इन्द्रं रथे वहतो हर्यता हरी ।
पुरूण्यस्मै सवनानि हर्यत इन्द्राय सोमा हरयो दधन्विरे ॥ १ ॥

ता । वज्रिणम् । मन्दिनम । स्तोम्यम् । मदे । इन्द्रम् । रथे । वहतः । हर्यता । हरी इति ।
पुरूणि । अस्मै । सवनानि । हर्यते । इन्द्राय । सोमाः । हरयः । दधन्विरे ॥ १ ॥

हर्यता **हर्यतौ गन्तारौ कमनीयौ वा** ता **तौ प्रसिद्धौ** हरी **एतन्नामकावश्वौ** वज्रिणम् **वज्रोपेतं** मन्दिनम् **मोदमानं**[1] **हृष्यमाणं** स्तोम्यम् **स्तोमार्हं स्तुत्यम् एवंमहानुभावम्** इन्द्रं मदे **सोमपानजनिताय मदाय** रथे वहतः **धारयतः अस्मदीयं यज्ञं प्रापयतः**[2] । हर्यते **कान्ताय** अस्मै इन्द्राय पुरूणि **बहूनि त्रीण्यपि** सवनानि **प्रातरादीनि** हरयः **हरितवर्णाः** सोमा दधन्विरे **अधारयन् धारयन्ति** ।

अरं कामाय हरयो दधन्विरे स्थिराय हिन्वन् हरयो हरी तुरा ।
अर्वद्भिर्यो हरिभिर्जोषमीयते सो अस्य कामं हरिवन्तमानशे ॥ २ ॥

अरम् । कामाय । हरयः । दधन्विरे । स्थिराय । हिन्वन् । हरयः । हरी इति । तुरा ।
अर्वत्ऽभिः । यः । हरिऽभिः । जोषम् । ईयते । सः । अस्य । कामम् । हरिऽवन्तम् । आनशे ॥

कामाय **कमनीयाय** स्थिराय **संग्रामे अविचलिताय इन्द्राय** अरम् **अलम् अत्यर्थं** हरयः **हरितवर्णाः सोमा** दधन्विरे **सवनानि धारयन्ति । त एव** हरयः **हरितवर्णाः सोमाः** तुरा **तुरौ त्वरमाणौ** हरी **अश्वौ** हिन्वन् **अहिन्वन् प्रेरयन्ति यज्ञं प्रति प्रेरयन्ति** । यः **य इन्द्रः** अर्वद्भिः **अरणवद्भिर्वेगवद्भिः** हरिभिः **अश्वैः** वाजम्[3] **यज्ञम्** ईयते **गच्छति स इन्द्रः** अस्य **यज्ञस्य** कामम् **कामयितव्यं** हरिवन्तम् **सोमवन्तं यजमानम्**[4] आनशे **व्याप्नोति । यद्वा यो रथः अर्वद्भिर्हरिभिः वाजम्**[3] **ईयते स रथः अस्येन्द्रस्य स्वभूतं कामं हरिवन्तम् आनशे इन्द्रं धारयित्वा प्राप्नोति ।**

हरिश्मशारुर्हरिकेश आयसस्तुरस्पेये यो हरिपा अवर्धत ।
अर्वद्भिर्यो हरिभिर्वाजिनीवसुरति विश्वा दुरिता पारिषद्धरी ॥ ३ ॥

हरिऽश्मशारुः । हरिऽकेशः । आयसः । तुरःऽपेये । यः । हरिऽपाः । अवर्धत । अर्वत्ऽभिः ।
यः । हरिऽभिः । वाजिनीऽवसुः । अति । विश्वा । दुःऽइता । पारिषत् । हरी इति ॥ ३ ॥

हरिश्मशारुः **हरितवर्णश्मश्रुयुक्तः** हरिकेशः **हरितवर्णकेशोपेतः** आयसः **अयो-विकारभूतः । अयःसारवत्कठिनहृदय इत्यर्थः । क एवमात्मक इति तम् आह—**

---

१. मो नास्ति S'. २. °यत S'. ३. वैसु. मंपा. ४. यज्ञम् S'.

यः यः प्रसिद्ध इन्द्रः तुरस्पेये तूर्णं पातव्ये सोमे निष्पन्ने सति हरिपाः हरिद्वर्णस्य सोमस्य पाता सन् अवर्धत वर्धते । यः च[1] वाजिनीवसुः वाजः अन्नं हविर्लक्षणं सोऽस्यां[2] क्रियायां विद्यते सा वाजिनी। सैव वसु धनं यस्य स तथोक्तः। अथवा वाजिनमेव वाजिनी सैव वसु धनं यस्य स तादृश इन्द्रः अर्वद्भिः अरणकुशलैः शीघ्रगामिभिः हरिभिः अश्वैः सोमपानाय आगच्छति तैर्वाजिनीवसुर्भवतीति वा योज्यम्। स तादृश इन्द्रः हरी अश्वौ रथे योजयित्वा आगत्य अस्माकं विश्वा विश्वानि सर्वाणि दुरिता दुरितानि अति पारिषत् पारयतु । नाशयत्वित्यर्थः। अस्मान् विश्वानि दुरितानि पारिषत् पारयतु तारयत्विति वा योज्यम्। पॄ[3] पूरणे। चुरादिः। अत्र हिंसाकर्मा। ण्यन्तात् पञ्चमलकारः। 'सिब्बहुलं लेटि' (पा ३,१,३४) इति सिप्। निघातः।

स्रुवेव यस्य हरिणी विपेततुः शिप्रे वाजाय हरिणी दविध्वतः।
प्र यत् कृते चमसे मर्मृजद्धरी पीत्वा मदस्य हर्यतस्यान्धसः ॥ ४ ॥

स्रुवाऽइव। यस्य। हरिणी इति। विऽपेततुः। शिप्रे इति। वाजाय। हरिणी इति। दविध्वतः। प्र। यत्। कृते। चमसे। मर्मृजत्। हरी इति। पीत्वा। मदस्य। हर्यतस्य। अन्धसः ॥४॥

यस्य इन्द्रस्य हरिणी हरितवर्णे शिप्रे हनू स्रुवेव स्रुवाविव ते यथा यज्ञे संचरतः एवं सोमपानाय विपेततुः विपततः। चलत इत्यर्थः। [4]यस्य च[4] वाजाय अन्नाय सोमलक्षणाय तत्पानाय हरिणी हरितवर्णे[5] शिप्रे दविध्वतः कम्पयतः पुरतः स्थितस्य पानाय चलतः। 'दाधर्ति' (पा ७,४,६५) इत्यादिना निपातितोऽयम्। यद्वृत्तयोगाद् अनिघातः। 'अभ्यस्तानाम् आदिः' (पा ६,१,१८९) इत्याद्युदात्तः। तथा यत् यदा चमसे पात्रे कृते संस्कृते सोमेन पूर्णे सति मदस्य मादकस्य हर्यतस्य कमनीयस्य अन्धसः सोमलक्षणस्यान्नस्य अंशं पीत्वा हरी प्र मर्मृजत् हरितवर्णावश्वौ प्रमार्ष्टि। स इन्द्रस्तदानीं स्तुत इत्यर्थः। अथवा कर्मणि षष्ठ्यन्ता एते। मदं हर्यतम् अन्धः पीत्वा शिप्रे दविध्वत इति योज्यम्।

उत स्म सद्म हर्यतस्य पस्त्योरत्यो न वाजं हरिवाँ अचिक्रदत्।
मही चिद्धि धिषणाहर्यदोजसा बृहद् वयो दधिषे हर्यतश्चिदा ॥ ५ ॥

उत। स्म। सद्म। हर्यतस्य। पस्त्योः। अत्यः। न। वाजम्। हरिऽवान्। अचिक्रदत्। मही। चित्। हि। धिषणा। अहर्यत्। ओजसा। बृहत्। वयः। दधिषे। हर्यतः। चित्। आ ॥

1. वाजिनमेव वाजिनी सैव वसु धनं यस्य स तादृशः यश्च S'. 2. सायस्यां S'. 3. प्रा S'. 4. यश्च S'. 5. हरितवर्णे S'.

उत स्म । **स्मेति पूरणः । अपि च** हर्यतस्य **गन्तव्यस्य कमनीयस्य वा इन्द्रस्य** सद्म **सदनं** पस्त्योः **द्यावापृथिव्योः संबन्धि भवति । स इन्द्रः** अत्यो न वाजम् । **अत्य इति अश्वनाम । अश्वः संग्राममिव** हरिवान् **हरिभिर्युक्तः सन्** अचिक्रदत् **यज्ञगृहं प्रति गच्छति । कदि क्रदि वैक्लव्ये । अत्र गत्यर्थः । छान्दसो लुङ् । च्लेश्चङि णिलोपः । सन्वद्भावाद् इत्त्वम् । निघातः । किं च** मही चित् **महती** धिषणा **अस्मदीया स्तुतिरपि** ओजसा **बलेन युक्तम् इन्द्रम्** अहर्यत् **कामयते । अतः हे इन्द्र** हर्यतश्चित् **कामयमानस्य यजमानस्यापि तदर्थम्** आ **आगत्य** बृहत् **महत् प्रभूतं** वयः **अन्नं** दधिषे **धारयसि प्रयच्छसि ।**

**आ रोदसी हर्यमाणो महित्वा [1]नव्यंनव्यं हर्यसि मन्म नु प्रियम् ।**
**प्र पस्त्यमसुर हर्यतं गोराविष्कृधि हरये सूर्याय ॥ १ ॥**

आ । रोदसी इति । हर्यमाणः । महिऽत्वा । नव्यम्ऽनव्यम् । हर्यसि । मन्म । नु । प्रियम् ।
प्र । पस्त्यम् । असुर । हर्यतम् । गोः । आविः । कृधि । हरये । सूर्याय ॥ १ ॥

**हे इन्द्र** हर्यमाणः **कामयमानस्त्वं**[1] महित्वा **महत्त्वेन** रोदसी । **सकारान्तपक्षे द्विवचनान्तम् एतत् । ईकारान्तपक्षे रोदसी रोदस्यावित्यर्थः ।** 'वा छन्दसि' ( पा ६, १,१०६ ) **इति पूर्वसवर्णदीर्घः । द्यावापृथिव्यौ** आ । **उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । पूरयसि । तथा हे इन्द्र** नव्यंनव्यम् **नवतरंनवतरम् असकृच्छ्रुतेऽपि**[2] **सर्वदा नूत्नम् अत एव** प्रियम् **हृदयंगमं** मन्म **मननीयं स्तोत्रं** नु **क्षिप्रं** हर्यसि **कामयसे । हे** असुर **असवः प्राणास्तद्वन् प्रकृष्टबलवन्निन्द्र** हर्यतम् **स्पृहणीयं** गोः । **जातावेकवचनम् । गवाम् आवासभूतं** पस्त्यम् । **गृहनामैतत् । गृहं पणिभिरपहृतानां गवां निवासस्थानं** हरये **हरणशीलाय हरिद्वर्णाय वा** सूर्याय **तदर्थं स यथा गाः प्रत्यर्पयति स्तोतृभ्यः तथा** आविष्कृधि **प्रकटीकुरु । अथवा गोशब्दः उदकवाची । गवाम् उदकानां पस्त्यम् स्थानं हरये सूर्याय आविष्कृधि स यथा वृष्टिं प्रयच्छति तथा कुरु ।** 'आदित्याज्जायते वृष्टिः' ( मस्मृ ३,७६ ) **इति स्मृतेः**[3] ।

**आ त्वा हर्यन्तं प्रयुजो जनानां रथे वहन्तु हरिशिप्रमिन्द्र ।**
**पिबा यथा प्रतिभृतस्य मध्वो [4]हर्यन् यज्ञं सधमादे दशोणिम् ॥ २ ॥**

आ । त्वा । हर्यन्तम् । प्रऽयुजः । जनानाम् । रथे । वहन्तु । हरिऽशिप्रम् । इन्द्र ।
पिब । यथा । प्रतिऽभृतस्य । मध्वः । हर्यन्[5] । यज्ञम् । सधऽमादे । दशऽओणिम् ॥२॥

---

१. **'नव्यंनव्यं'** इति मन्त्रपदमारभ्य **'कामयमानस्त्वं'** इति भाष्यस्थपदपर्यन्तं नास्ति S'.
२. **°कृत्सुतेऽपि** S'. ३. **श्रुतेः** S'. ४. **हर्यन्यज्ञं** K,V; **हर्यन्युज्ञं** C,E,Cs.
५. **हर्यन्** V.

हे इन्द्र हरिशिप्रम् सोमपानेन हरितवर्णाभ्यां हनुभ्यां युक्तं त्वा त्वाम्। भाविगत्यैवमुक्तः। आगतस्य सोमपाने सति शिप्रयोर्हरिद्वर्णत्वसंभवात्। तादृशं हर्यन्तम् सोमपानं कामयमानं त्वा त्वां जनानाम् यजमानानाम् अर्थाय प्रयुजः प्रकर्षेण परस्परं संयुक्ता अश्वाः रथे आ वहन्तु प्रापयन्तु। हे इन्द्र प्रतिभृतस्य संभृतस्य ग्रहचमसेषु धृतस्य मध्वः[1] मधुवत्प्रियभूतस्य सोमस्य। कर्मणि षष्ठ्यौ। प्रतिभृतं मधु हर्यन् कामयमानो यज्ञम् यज्ञसाधनभूतं दशोणिम्। ओणयः अङ्गुलयः। दशभिरङ्गुलिभिर्निष्पीडितं सोमं सधमादे। सह माद्यन्त्यत्रेति सधमादो यज्ञः। तस्मिन्[2] यथा पिब यथा पिबसि। तथा त्वां रथे वहन्तु इत्यर्थः।

अपाः पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते।
ममद्धि सोमं मधुमन्तमिन्द्र सत्रा वृषं जठर आ वृषस्व ॥ ३ ॥

अपाः। पूर्वेषाम्। हरिऽवः। सुतानाम्। अथो इति। इदम्। सवनम्। केवलम्। ते।
ममद्धि। सोमम्। मधुऽमन्तम्। इन्द्र। सत्रा। वृषन्। जठरे। आ। वृषस्व ॥ ३ ॥

हे हरिवः हरिवन् हरिभ्यां तद्वन् इन्द्र त्वं सुतानाम् अभिषुतानां पूर्वेषाम् प्रातःसवनसंपादितानां सोमानाम्। माध्यंदिनसवनापेक्षया पूर्वत्वम् एषाम्। कर्मणि षष्ठ्यावेते। अभिषुतान् प्रातःसवनिकान् सोमान् अपाः पीतवान् असि। अथो अपि च इदं माध्यंदिनं सवनं केवलम् असाधारणं ते तवैव। 'माध्यंदिनं सवनं केवलं ते' (ऋ ४,३५,७) इति हि मन्त्रान्तरम्। अतो माध्यंदिने सवने मधुमन्तम् माधुर्योपेतं सोमं ममद्धि। मदवाचिना मदिधातुना पानम् अन्तरेण मदाभावात् पानम् आक्षिप्यते। अतः पिबेत्यर्थः। मदि स्तुत्यादौ। 'बहुलं छन्दसि' (पा २,४,७६) इति शपः श्लुः। पादादित्वाद् अनिघातः। हेरपित्त्वात् प्रत्ययस्वरः। हे वृषन् वर्षक इन्द्र सत्रा साकम् एकधैव जठरे उदरे आ वृषस्व आसिञ्च। यथा कुक्षेः पूर्तिर्भवति तथा पिबेत्यर्थः।

अप्सु धूतस्य हरिवः पिबेह नृभिः सुतस्य जठरं पृणस्व।
मिमिक्षुर्यमद्रय इन्द्र तुभ्यं तेभिर्वर्धस्व मदमुक्थवाहः ॥ १ ॥

अप्ऽसु। धूतस्य। हरिऽवः। पिब। इह। नृऽभिः। सुतस्य। जठरम्। पृणस्व।
मिमिक्षुः। यम्। अद्रयः। इन्द्र। तुभ्यम्। तेभिः। वर्धस्व। मदम्। उक्थऽवाहः ॥ १ ॥

हे हरिवः हरिवन् इन्द्र अप्सु उदकेषु सोमाभिषवार्थेषु धूतस्य कम्पितस्य मिश्रितस्य। कर्मणि षष्ठी। अप्सु धूतं नृभिः नेतृभिः अध्वर्युप्रभृतिभिः सुतस्य सुतम् अभिषुतं सोमम् इह अस्मिन् यज्ञे पिब पानं कुरु पीत्वा जठरं पृणस्व च पूरय। जठरपूर्तिपर्यन्तं पिबेत्यर्थः। 'चादिलोपे विभाषा' (पा ८,१,६३) इति प्रथमा तिङ्विभक्तिर्न निहन्यते। पृणस्वेत्येषा द्वितीया तु निहन्यत एव। हे इन्द्र तुभ्यं त्वदर्थं

1. मध्वोः S'. 2. तस्मै S'.

यं सोमम् अद्रयः अभिषवसाधना ग्रावाणो मिमिक्षुः सेक्तुम् अभिषवं कर्तुम् ऐच्छन्। तेभिः तैरभिषुतैः सोमरसैः हे उक्थवाहः उक्थैः शस्त्रैरुह्यमान इन्द्र तव मदं वर्धस्व अभिवृद्धं कुरु। मत्तो भवेत्यर्थः।

प्रोग्रां पीतिं वृष्णं इयर्मि सत्यां प्रयै सुतस्यं हर्यश्व तुभ्यम्।
इन्द्र धेनाभिरिह मादयस्व धीभिर्विश्वाभिः शच्या गृणानः ॥ २ ॥

प्र। उग्राम्। पीतिम्। वृष्णे। इयर्मि। सत्याम्। प्रऽयै। सुतस्यं। हरिऽअश्व। तुभ्यम्। इन्द्र। धेनाभिः। इह। मादयस्व। धीभिः। विश्वाभिः। शच्या। गृणानः ॥ २ ॥

हे हर्यश्व हरिनामकाश्वोपेत इन्द्र वृष्णे अभिमतफलवर्षकाय तुभ्यं 'प्रयै प्रकर्षेण गन्तुम्'[1]। प्रपूर्वाद् या प्रापणे इत्यस्मात् 'प्रयै रोहिष्यै अव्यथिष्यै' (पा ३,४,१०) इति छन्दसि तुमर्थे कैप्रत्ययान्तो निपातितः। प्रत्ययस्वरेण अन्तोदात्तः। तदर्थं सुतस्य अभिषुतस्य सोमस्य उग्राम् उद्गूर्णबलां सत्याम् अवितथमदलक्षणफलोपेतां पीतिम् पानं प्रेयर्मि प्रेरयामि। किं च हे इन्द्र शच्या। कर्मनामैतत्। यागेन निमित्तेन विश्वाभिः सर्वाभिः धीभिः स्तुतिभिः गृणानः स्तूयमानः सन् धेनाभिः प्रीणयित्रीभिः स्तुतिभिर्वाग्भिः इह अस्मिन् यज्ञे मादयस्व तृप्तो भव। मद तृप्तियोगे। चुरादिः। आत्मनेपदी।

ऊती शचीवस्तव वीर्येण वयो दधाना उशिजं ऋतज्ञाः।
प्रजावदिन्द्र मनुषो दुरोणे तस्थुर्गृणन्तः सधमाद्यासः ॥ ३ ॥

ऊती। शचीऽवः। तव। वीर्येण। वयः। दधानाः। उशिजः। ऋतऽज्ञाः। प्रजाऽवत्। इन्द्र। मनुषः। दुरोणे। तस्थुः। गृणन्तः। सधऽमाद्यासः ॥ ३ ॥

हे शचीवः शक्तिमन् इन्द्र ऊती ऊत्या रक्षणेन तव वीर्येण सामर्थ्येन च प्रजावत् पुत्रादिरूपाभिः प्रजाभिरुपेतं वयः अन्नं दधानाः धारयन्तः उशिजः त्वां कामयमानाः ऋतज्ञाः सत्यभूतफलसाधनं यज्ञं जानन्तः। षष्ठस्याह्नः प्रयोगस्य अतिगहनत्वाद् ऋतज्ञा इत्युक्तम्। सत्रे ये यजमानास्ते ऋत्विज इति शास्त्रेण सर्वेषां यजमानभूतानाम् ऋत्विजां फलसाधारण्यात् प्रजावद् वयो दधाना इति फलसंबन्धवचनं युक्तम्। एवंभूता ऋत्विजो मनुषः मनुष्यस्य यजमानस्य दुरोणे यागगृहे। 'दुरोण इति गृहनाम। दुरवा भवन्ति दुस्तर्पाः' (नि ४,५) इति यास्कः। सत्रस्य बहुकर्तृकत्वेऽपि कस्य चिद् यजमानस्य अवश्यंभावाद् मनुषो दुरोण

---

[1] प्रकर्षेण गन्तुं प्रयै S'.

इत्युक्तम् । सधमाद्यासः सह मदनीयाः सन्तो गृणन्तः त्वां स्तुवन्तः तस्थुः तिष्ठन्ति ।

इति तृतीयेऽनुवाके त्रयोदशं सूक्तम् ।

समाप्तश्च तृतीयोऽनुवाकः ।

चतुर्थेऽनुवाके चत्वारि सूक्तानि । तत्र 'यो जात एव' इति प्रथमं सूक्तं सामसूक्तम् इति व्यवह्रियते । 'अस्मा इदु प्र तवसे' इति द्वितीयं सूक्तम् अहीनसूक्तम् इति व्यवह्रियते । द्वादशाहादौ वैराजपृष्ठे विश्वजिति 'यो जातः' इति सूक्तं ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्तम् । सूत्रितं हि वैताने [1]"नवरात्रेऽभिजिद्विषुवान् विश्वजिच्चतुर्विंशवत्" इत्युपक्रम्य — "विश्वजिति वैराजपृष्ठे 'यद् द्याव इन्द्र ते शतम्' (अ २०,८१,१), 'यद् इन्द्र यावतस्त्वम्' (अ २०,८२,१) इति पृष्ठस्तोत्रियानुरूपौ बार्हतौ उक्ते योनी । 'इन्द्र क्रतुं न आ भर' (अ २०,७९,१) इति [2]तृतीयाम् । 'इन्द्र त्रिधातु शरणम्' (अ २०,८३,१) इति सामप्रगाथः । सुकीर्तिंवृषाकपी[3] 'यो जात एव प्रथमो मनस्वान्' (अ २०,३४) इति सामसूक्तम् अहीनसूक्तम् आवपते" (वैताश्रौ ३३,१;९–१२) इति ।

[4]तथा †अप्तोर्याम्णि क्रतावपि† माध्यंदिनसवने अस्य सूक्तस्य ब्राह्मणाच्छंसिशस्त्रे विनियोगः । 'अप्तोर्याम्णि गर्भकारं शंसति' इति प्रक्रम्य सूत्रितम् — '‡सुकीर्तिं वृषाकपिं‡ सामसूक्तम् अहीनसूक्तम् आवपते' (वैताश्रौ २७,१८;२४) इति ।[4]

एतत्सूक्तविषय इतिहासो बृहद्देवतानुक्रमण्याम् उक्तः —

"संयुज्य तपसात्मानम् ऐन्द्रं बिभ्रन्महद् वपुः ।
अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च ॥

तम् इन्द्रम् इति मत्वा तु दैत्यौ[7] भीमपराक्रमौ ।
धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः ॥

विदित्वा स तयोर्भावम् ऋषिः पापं चिकीर्षतोः ।
'यो जात' इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत् ॥" (बृदे ४,६६–६८)

अपरे त्वन्यथा वर्णयन्ति —

"पुरा किल महेन्द्राद्या वैन्ययज्ञं समागताः ।
ऋषिर्गृत्समदस्तत्र वैन्यस्य सदसि स्थितः ॥
असुराश्च समाजग्मुः शीघ्रम् इन्द्रजिघांसया ।
तान् दृष्ट्वा निर्जगामेन्द्रो यज्ञाद्[8] गृत्समदाकृतिः ॥

निरगात् सोऽपि तद्यज्ञाद् ऋषिर्वैन्येन पूजितः ।
तं दृष्ट्वा चेन्द्र एवायम् इति ते जगृहुः किल ॥

---

१. °द्विश्वजिद् विषुवान् विश्वजि° S'. २. ततीयेन्द्र S'. ३. सुकीर्तिं वृषाकपि S'. ४. संपूर्णमिमं सन्दर्भं पुनरावर्तयति S'. †. °र्यामक्रता° S'. ‡. °कीर्तिवृषाकपी RG. ७. दैत्यो S'. ८. यज्ञान् S'.

नाहम् इन्द्रोऽस्मि किं त्वेवंगुणोपेतः स इत्यृषिः ।
'यो जात' इति सूक्तेन निराचक्रे वधोद्यतान् ॥'' इति ।

केचित् तु अत्र सूक्ते 'यं स्मा पृच्छन्ति कुह सेति घोरम् उतेमाहुर्नैषो अस्तीत्येनम्' (५) इति इन्द्रस्य नास्तित्ववचनाद् अन्यत्रापि 'नेन्द्रो अस्तीति नेम उ त्व आह क ईं ददर्श' (ऋ ८,१००,३) इति इन्द्रस्याभावश्रवणाच्च तत्सद्भावं निराकुर्वाणान् प्रति अस्मिन् सूक्ते इन्द्रस्य [1]असाधारणमाहात्म्यकथनैस्तदस्तित्वम् अवागमयद् इति आहुः[1] ।

यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् ।
यस्य शुष्माद् रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥ १ ॥

यः । जातः । एव । प्रथमः । मनस्वान् । देवः । देवान् । क्रतुना । परिऽअभूषत् ।
यस्य । शुष्मात् । रोदसी इति । अभ्यसेताम् । नृम्णस्य । मह्ना । सः । जनासः । इन्द्रः ॥१॥

य[2] इन्द्रो देवः जात एव प्रादुर्भूतमात्रः सन् प्रथमः प्रकृष्टतमो मुख्यः सन्। 'प्रथम इति मुख्यनाम । प्रतमो भवति' इति निरुक्तम् (२,२२)। मनस्वान् प्रकृष्टेन अनुग्राहकेण मनसा युक्तो देवान् इतरान् क्रतुना कर्मणा असाधारणेन व्यापारेण पर्यभूषत् परिभावयांचकार । स्वाधीनान् अकरोत् । रक्ष्यत्वेन पर्यगृह्णाद् वा । यस्य इन्द्रस्य शुष्मात् शोषकाद् बलाद् रोदसी द्यावापृथिव्यौ अभ्यसेताम् भीते अभूताम्। शुष्मात् इत्यनेन शारीरं बलम् अभिधाय सेनालक्षणं बलं भयसाधनतया अभिधत्ते—नृम्णस्य मह्ना इति । नॄन् शत्रुजनान् प्रति अभिभावुकं मनो यस्य स तादृशः उक्तलक्षणान् नॄन् नमयतीति वा नृम्णं सेनादिलक्षणं बलम्। तस्य मह्ना महत्त्वेन च अभ्यसेताम् इति पूर्वत्रान्वयः। हे जनासः असुरजनाः सं इन्द्रो नाहम् इति ऋषिः आत्मन इन्द्रत्वं पर्यहरत् । अस्य सूक्तस्य इन्द्रसद्भावप्रतिपादनपरत्वपक्षे हे जनासः इन्द्रो नास्तीति मन्यमाना जनाः उक्तगुणोपेतः स इन्द्रोऽस्त्येवेति व्याख्येयम्। अत्र निरुक्तम्—'यो जात एव प्रथमो मनस्वान् देवो देवान्। क्रतुना कर्मणा। पर्यभवत् पर्यगृह्णात् पर्यरक्षद् अत्यक्रामद् इति वा । यस्य बलाद् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन । स जनास इन्द्र इति । ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता' (नि १०,१०) इति । पर्यभूषत् इति। भवतेर्लुङि व्यत्ययेन च्लेः क्सः। 'श्र्युकः किति' (पा ७,४,११) इति इट्प्रतिषेधः। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः । अटः स्वरः। 'तिङि चोदात्तवति' (पा ८,१,७१) इति गतेर्निघातः।

यः पृथिवीं व्यथमानामदृंहद् यः पर्वतान् प्रकुपिताँ अरम्णात् ।
यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात् स जनास इन्द्रः ॥ २ ॥

---

१. °दस्तित्वगवागमयदित्यवचिदाहुः S', २. नास्ति S',

यः । पृथिवीम् । व्यथमानाम् । अदृंहत् । यः । पर्वतान् । प्रऽकुपितान् । अरम्णात् ।
यः । अन्तरिक्षम् । विऽममे । वरीयः । यः । द्याम् । अस्तभ्नात् । सः । जनासः । इन्द्रः ॥

हे जनासः जनाः य इन्द्रः व्यथमानाम् चलन्तीं पृथिवीम् अदृंहत् शर्करादिभिर्दृढाम् अकरोत् । यः च प्रकुपितान् प्रकोपं प्राप्तान् परस्परं[1] युद्धाय [2]इतस्ततश्चलतः पर्वतान् गिरीन् पक्षयुक्तान् अरम्णात् पक्षच्छेदेन नियमितवान् । यथा उत्प्लुत्योत्प्लुत्य प्राणिपीडां न कुर्वन्ति तथा स्वस्थाने स्थापितवान् इत्यर्थः । रमु क्रीडायाम् । अस्य अन्तर्भावितण्यर्थस्य व्यत्ययेन श्ना । अस्य अदृंहत् इत्यस्य च यद्वृत्तयोगाद् अनिघातः । अडागमस्वरः । यः च इन्द्रः अन्तरिक्षम् । अन्तरा क्षान्तं भवति सर्वम् इत्यन्तरिक्षम् । कीदृशम् । वरीयः उरुतरम् इयत्ताशून्यं विममे विमानम् अकरोत् । माङ् माने इत्यस्य रूपम् । यः च द्याम् दिवम् अस्तभ्नात् निरुद्धाम् अकरोत् स इन्द्रः इतीन्द्रस्य सद्भावं मुनिरुपादिक्षत् ।

यो हत्वाहिमरिणात् सप्त सिन्धून् यो गा उदाजदपधा वलस्य ।
यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः ॥ ३ ॥

यः । हत्वा । अहिम् । अरिणात् । सप्त । सिन्धून् । यः । गाः । उत्ऽआजत् । अपऽधा । वलस्य ।
यः । अश्मनोः । अन्तः । अग्निम् । जजान । सम्ऽवृक् । समत्ऽसु । सः । जनासः । इन्द्रः ॥

य इन्द्रः अहिम् अन्तरिक्षे गन्तारं मेघं हत्वा विदार्य सप्त सर्पणशीलान् सिन्धून् । नदीरित्यर्थः । सप्तसंख्याका गङ्गायमुनादिनदीर्वा अरिणात् प्रैरयत् । री गतिरेषणयोः । क्र्यादिः । यः च वलस्य एतन्नामकस्यासुरस्य गाः असुरेणापहृता बिले स्थापिता गाः अपधा । अप कुत्सितं धीयत इत्यपधा पिधानम् । तस्माद् [3]उदाजत् उदगमयत् । अपपूर्वाद् दधातेः 'आतश्चोपसर्गे' (पा ३,३,१०६) इति अङ् । 'सुपां सुलुक्°' (पा ७,१,३९) इति पञ्चम्या आकारः । यः च अश्मनोः व्याप्तयोर्मेघयोः अन्तः अग्निं जजान उदपादयत् । मेघयोः संघर्षेण वैद्युतोऽग्निर्जायत इति प्रसिद्धम् एतत् । अब्धारकत्वेन अतिशीतत्वात् तत्र अग्न्युत्पादनम् इन्द्रस्य असाधारणं सामर्थ्यम् । यश्च समत्सु संग्रामेषु संवृक् शत्रुसंवर्जको भवति । स इन्द्रः इत्यसाधारणैः कर्मभिः एवम् इन्द्रं ज्ञापयामास ।

येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाऽकः ।
श्वघ्नीव यो जिगीवां लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥ ४ ॥

येन । इमा । विश्वा । च्यवना । कृतानि । यः । दासम् । वर्णम् । अधरम् । गुहा । अकरित्यकः ।
श्वघ्नीऽइव । यः । जिगीवान् । लक्षम् । आदत् । अर्यः । पुष्टानि । सः । जनासः । इन्द्रः ॥

---

१. परस्पर° S'. २. यतस्तत° S'. ३. आजत् S'.

येन इन्द्रेण इमा इमानि परिदृश्यमानानि विश्वा विश्वानि सर्वाणि च्यवना च्यवनानि स्वेन च्यावयितव्यानि कृतानि । यद्वा च्यवनानि कृतानि । दृढीकृतानीत्यर्थः । च्युङ् प्लुङ् गतौ । 'कृत्यल्युटो बहुलम्' (पा ३,३,११३) इति ल्युट् । 'शेश्छन्दसि बहुलम्' (पा ६,१,७०) इति शेर्लुक् । यः च इन्द्रः दासम् उपक्षपयितारम् असुरं वर्णम् नीचवर्णम् अधरम् निकृष्टं कृत्वा गुहा गुहायाम् अकः अकार्षीत् । किं च लक्षम् लक्ष्यं योयः प्रकाशभूतः शत्रुरस्ति तंतं • जिगीवान् जितवान् । जि जये । क्वसौ 'सन्लिटोर्जेः' (पा ७,३,५७) इत्यभ्यासाद् उत्तरस्य कुत्वम् । छान्दसो दीर्घः । तादृशो यः अर्यः अरेः पुष्टानि समृद्धानि धनानि आदत् स्वीकरोति । तत्र दृष्टान्तः—श्वघ्नीव श्वभिः साधनैः मृगान् हन्तीति श्वघ्नी व्याधः स यथा जिगीवान् सन् लक्ष्यमाणं मृगं स्वीकरोति तद्वत् । हे जनासः जनाः स इन्द्रः इत्यृषिर्ब्रूते ।

यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम् ।
सो अर्यः पुष्टीर्विज[1] इवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः ॥ ५ ॥

यम् । स्म । पृच्छन्ति । कुह । सः । इति । घोरम् । उत । ईम् । आहुः । न । एषः । अस्ति । इति । एनम् । सः । अर्यः । पुष्टीः । विजःऽइव । आ । मिनाति । श्रत् । अस्मै । धत्त । सः । जनासः । इन्द्रः ॥ ५ ॥

घोरम् शत्रूणां हन्तारं भयंकरं यम् इन्द्रं जनाः पृच्छन्ति स्म प्रश्नं कुर्वन्ति । 'निपातस्य च' (पा ६,३,१३६) इति स्मेत्यस्य संहितायां दीर्घः । किमिति । इन्द्र इन्द्र इति सर्वे जना ब्रुवते स कुह कुत्र वर्तत इति । उत अपि च ईम् एनम् इन्द्रम् आहुः केचन ब्रुवते । किमिति । एष इन्द्रो नास्ति इति । अस्ति चेत् दृष्टिपथं प्राप्नुयात् । न तथास्ति अत एष नास्तीति ब्रुवते । तथा च मन्त्रान्तरम्— 'नेन्द्रो अस्तीति नेम उ त्व आह क ईं ददर्श' (ऋ ८,१००,३) इति । एवं संशयो न कार्यः । स त्विन्द्रः अर्यः अरेः पुष्टीः पोषिकाः सेनाः विज इव । इवशब्दः एवार्थे । उद्वेजक एव सन् । अथवा विजो भयहेतुः व्याघ्रादिदुष्टमृगः । स इव आ सर्वतो मिनाति हिनस्ति । सेति[2] इत्यत्र 'सोऽचि लोपे चेत् पादपूरणम्' (पा ६,१,१३४) इति सोर्लोपे गुणः । अस्मै इन्द्राय इन्द्रविषये हे नराः श्रद्धत्त । श्रत् इति सत्यनाम । विश्वासं कुरुत । इन्द्रोऽस्ति चेत् कुत्र तिष्ठतीति स नास्त्येवेति वा अविश्वासं मा कुरुत । स नास्ति चेत् वृत्रादिशत्रुसेनास्तदन्यः को जयेत् । अतो यः शत्रुसेनानां जेताऽस्ति हे जनासः जनाः स इन्द्र इति ।

---

१. पुष्टीर्भ्रंज ? पै १३,७,५.    २. सो अर्य S'.

यो र॒ध्रस्य॑ चोदि॒ता यः कृ॒शस्य॒ यो ब्र॒ह्मणो॒ नाध॑मानस्य की॒रेः ।
यु॒क्तग्रा॑व्णो॒ यो॑ऽवि॒ता सु॑शि॒प्रः सु॒तसो॑मस्य॒ स ज॑नास॒ इन्द्रः॑ ॥ ६ ॥

यः । र॒ध्रस्य॑ । चो॒दि॒ता । यः । कृ॒शस्य॑ । यः । ब्र॒ह्मणः॑ । नाध॑मानस्य । की॒रेः ।
यु॒क्तऽग्रा॑व्णः । यः । अ॒वि॒ता । सु॒ऽशि॒प्रः । सु॒तऽसो॑मस्य । सः । ज॒ना॒सः॒ । इन्द्रः॑ ॥ ६ ॥

य इन्द्रो रध्रस्य संराद्धस्य समृद्धस्यापि । रधेरौणादिको रक्प्रत्ययः। चोदिता अभिमतफलप्रेरयिता समृद्धस्य राजादेर्यः शत्रुः तस्य चोदिता अपगमयिता वा । यः च कृशस्य धनादिराहित्येन क्षीणस्यापि चोदिता तदभीष्टधनस्य प्रेरयिता। यः च कीरेः । स्तोतृनामैतत् । स्तोत्रकर्तुः नाधमानस्य अभिमतं फलं याचमानस्य ब्रह्मणः ब्राह्मणस्यापि चोदिता । यः च सुशिप्रः शोभनहनुरिन्द्रः युक्तग्राव्णः अभिषवाय प्रयुक्ताश्मनः सुतसोमस्य अभिषवादिना संस्कृतसोमस्य यजमानस्य अविता रक्षिता एवंमहानुभावो योऽस्ति हे जनासः जनाः स इन्द्र इति ।

यस्याश्वा॑सः प्र॒दिशि॒ यस्य॒ गावो॒ यस्य॒ ग्रामा॒ यस्य॒ विश्वे॒ रथा॑सः ।
यः सूर्यं॒ य उ॒षसं॑ ज॒जान॒ यो अ॒पां ने॒ता स ज॑नास॒ इन्द्रः॑ ॥ ७ ॥

यस्य॑ । अश्वा॑सः । प्र॒ऽदिशि॑ । यस्य॑ । गावः॑ । यस्य॑ । ग्रामाः॑ । यस्य॑ । विश्वे॑ । रथा॑सः ।
यः । सूर्य॑म् । यः । उ॒षस॑म् । ज॒जान॑ । यः । अ॒पाम् । ने॒ता । सः । ज॒ना॒सः॒ । इन्द्रः॑ ॥

पूर्वमन्त्रे धनिनो निर्धनस्य स्तोतुर्यष्टुश्च अभिमतप्रदाने यः समर्थः स इन्द्र इत्युक्तम् । अत्र प्राणिनाम् अपेक्षिता अश्वगोरथप्रकाशवृष्टिलक्षणा ये अर्थाः सन्ति तेषां सर्वेषां प्रदाने यः समर्थः स इन्द्र इत्यभिधीयते । यस्य इन्द्रस्य प्रदिशि प्रदेशने अनुशासने संविधौ वा । प्रपूर्वाद् दिश अतिसर्जने इत्यस्मात् क्विप् । आर्थिभ्यो दातव्या अश्वासः अश्वाः । सन्तीति शेषः । यस्य च गावः तदर्थिभ्यो दातव्या बह्व्यो गावः । यस्य च ग्रामलाभकामेभ्यो दित्सिता ग्रामाः। यस्य च विश्वे सर्वे रथासः रथाः । गजोष्ट्रयानादीनां परिग्रहाय विश्व इति विशेषितम् । यः च इन्द्रो गमनादिसर्वव्यवहारोपयोगिप्रकाशाय सूर्यं जजान। तथा य उषसं च जजान उत्पादितवान् । यः च अपाम् वृष्ट्युदकानां नेता प्रापयिता देवोऽस्ति हे जनासः जनाः स इन्द्र इति ।

यं क्रन्द॑सी सं॒यती॑ वि॒ह्वये॑ते॒ परेऽव॑र उ॒भया॑ अ॒मित्राः॑ ।
स॒मा॒नं चि॒द्रथ॑मातस्थि॒वांसा॒ नाना॑ हवेते॒ स ज॑नास॒ इन्द्रः॑ ॥ ८ ॥

यम् । क्रन्द॑सी॒ इति॑ । सं॒यती॒ इति॑ स॒म्ऽय॒ती । वि॒ह्वये॑ते॒ इति॑ वि॒ऽह्वये॑ते । परे॑ । अव॑रे । उ॒भयाः॑ । अ॒मित्राः॑ । स॒मा॒नम् । चि॒त् । रथ॑म् । आ॒त॒स्थि॒ऽवांसा॑ । नाना॑ । ह॒वे॒ते॒ इति॑ । सः । ज॒ना॒सः॒ । इन्द्रः॑ ॥

संयती परस्परं संगच्छमाने क्रन्दसी शब्दं कुर्वाणे । द्यावापृथिव्यावित्यर्थः । स्वाश्रितानां प्राणिनां वृष्ट्यर्थं पृथिवी द्यौश्च हविरर्थम् इत्युभयोः क्रन्दनम् । अथवा संयती परस्परं संगते क्रन्दसी प्रतिभटान् प्रतियुद्धाय आह्वयन्त्यौ उभे शत्रुसेने विह्वयेते इन्द्रं विविधम् आह्वयतः । स्वस्वसहायायेति शेषः । क्रदि आह्वाने रोदने च । असुन् । 'उगितश्च' (पा ४,१,६) इति ङीप् । उक्तमेवार्थं प्रकारान्तरेण स्पष्टम् आह — परे उत्कृष्टा अवरे निकृष्टाश्च । परस्परं जयपराजयापेक्षया परत्वम् अवरत्वं च द्रष्टव्यम् । एवम् उभया अमित्राः प्रतिद्वन्द्विसेनयोर्वर्तमानाः शत्रवः स्वस्वजयार्थं साहायकाय[1] विह्वयन्ते । इत्थं सेनाद्वयान्तःस्थितानाम् इन्द्राह्वानम् अभिधाय अथ सेनास्वामिनोः परस्परप्रतिद्वन्द्विनोरिन्द्राह्वानम् अभिधत्ते । समानं चित् अश्वसारथ्यादिभिः समानम् परस्परसदृशं रथम् आतस्थिवांसा अधिष्ठितवन्तौ । तिष्ठतेर्लिटः क्वसुः । 'शर्पूर्वाः खयः' (पा ७,४,६१) इति खयः शेषः । अभ्यासस्य ह्रस्वत्वे 'वस्वेकाजाद्घसाम्' (पा ७,२,६७) इति इडागमः । प्रत्ययस्वरः । तौ यं नाना पृथक्पृथक् हवेते आह्वयतः । गतम् अन्यत् ।

यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते ।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत् स जनास इन्द्रः ॥ ९ ॥

यस्मात् । न । ऋते । विऽजयन्ते । जनासः । यम् । युध्यमानाः । अवसे । हवन्ते ।
यः । विश्वस्य । प्रतिऽमानम् । बभूव । यः । अच्युतऽच्युत् । सः । जनासः । इन्द्रः ॥ ९ ॥

यस्माद् इन्द्रात् बलप्रदातुः ऋते इन्द्रसहायम् अनपेक्ष्य जनासः जनाः प्रबला दुर्बलाश्च सर्वे जयार्थिनो न विजयन्ते शत्रून् न पराभावयन्ति । अतश्च यम् इन्द्रं युध्यमानाः युद्धं कुर्वाणा अवसे स्वस्वरक्षणाय हवन्ते आह्वयन्ति । किं च यः च इन्द्रो विश्वस्य सर्वस्यापि वृत्रादिशत्रुजातस्य प्रतिमानम् । प्रतिमीयत इति प्रतिमानं प्रतिनिधिः बभूव । अथवा 'रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते' (ऋ ६,४७,१८) इति मन्त्रवर्णात् सर्वस्यापि प्राणिजातस्य तत्तत्पुण्यपापप्रत्यवेक्षणाय प्रतिबिम्बं बभूव । यः च अच्युतच्युत् अच्युतस्य केनापि अच्यावयितव्यस्य वृत्रादेः च्युतिरहितस्य स्थावरस्य पर्वतादेर्वा च्यावयिता स जनास इन्द्र इति ।

यः शश्वतो मह्येनो दधानानमन्यमानांछर्वा जघान ।
यः शर्धते नानुददाति शृध्यां यो दस्योर्हन्ता स जनास इन्द्रः ॥ १० ॥

---

[1] साहाय्यकाय S'.

यः । शश्वतः । महि । एनः । दधानान् । अमन्यमानान् । शर्वा । जघान ।
यः । शर्धते । न । अनुऽददाति । शृध्याम् । यः । दस्योः । हन्ता । सः । जनासः । इन्द्रः ॥

यः इन्द्रो महि महत् अत्यधिकम् एनः पापं ब्रह्महत्यादिरूपं दधानान् धारयतः शश्वतः । बहुनामैतत् । बहून् जनान् । जघानेति संबन्धः । के ते महापातकिन इति तान् आह — अमन्यमानान् इन्द्रम् उक्तमहिमोपेतं परदेवतेति मतिम् अकुर्वाणान् । स्तुत्या हविषा च इन्द्रम् अपूजयत इत्यर्थः । तादृशान् शर्वा हिंसक इन्द्रः । अथवा शरुर्वज्रः । तेन वज्रेण जघान हिनस्ति । अथवा अमन्यमानान् स्वात्मानं ब्रह्मतया अबुध्यमानान् । आत्मघातकान् इत्यर्थः । 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद सन्तम् एनं ततो विदुः' ( तैआ ८,६,१ ) इति श्रुतेः । अनात्मविदः पापिष्ठत्वं स्मर्यते —

'किं तेन न कृतं पापं चोरेणात्मापहारिणा' इति ।

तादृशानाम् इन्द्रकृतशिक्षा च श्रूयते — 'अरुर्मुखान् यतीन् सालावृकेभ्यः प्रायच्छत्' ( शाश्रौ १४,५०,१ ) इति । 'इन्द्रो यतीन्त्सालावृकेभ्यः प्रायच्छत्' ( तै ६,२,७,५ ) इति च । यः च शर्धते इन्द्रनैरपेक्ष्येण शत्रुषु बलम् उत्साहं वा कुर्वते पुरुषाय शृध्याम् बलसाधनं कर्म नानुददाति आनुकूल्येन न प्रयच्छति । डुदाञ् दाने । जौहोत्यादिकः । 'अभ्यस्तानाम् आदिः' ( पा ६,१,१८९ ) इत्याद्युदात्तः । 'तिङि चोदात्तवति' ( पा ८,१,७१ ) इति गतेर्निघातः । यः च[1] दस्योः वृत्रादेः हन्ता घातकः स जनास इन्द्र इति ।

**यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत् ।**
**ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥ ११ ॥**

यः । शम्बरम् । पर्वतेषु । क्षियन्तम् । चत्वारिंश्याम् । शरदि । अनुऽअविन्दत्[2] ।
ओजायमानम् । यः । अहिम् । जघान । दानुम् । शयानम् । सः । जनासः । इन्द्रः ॥

य इन्द्रः पर्वतेषु गिरिषु इन्द्रभीत्या क्षियन्तम् निवसन्तम् । पर्वतेष्विति बहुवचनेन इन्द्राद् भीतस्य शम्बरस्य एकत्रानवस्थानं सूचितं भवति । एवं गिरिगह्वरेष्वाच्छन्नं[3] शम्बरम् एतन्नामकम् असुरं चत्वारिंश्याम् । चत्वारिंशत्संख्यापूरणी चत्वारिंशी । तस्यां शरदि तस्मिन् संवत्सरे अन्वविन्दत् अन्विष्य लब्धवान् । लब्ध्वा व्यनाशयद् इत्यर्थः । किं च य इन्द्रः ओजायमानम् [4]ओजो बलम् । तद्वद् आचरन्तम्[4] । अतिशयितबलम् इत्यर्थः । 'कर्तुः क्यङ् सलोपश्च' ( पा ३,१,११ ) । 'ओजसोऽप्सरसो नित्यम्' ( पावा ३,१,११ ) इति सकारलोपः । तादृशम् अहिम् ।

---

१. यश्च स्वस्य S'. २. °अविंदत् P,P². ३. °गह्वरेष्ववछंनं S' ४. ओबलचरंतं S'.

आगत्य हन्तीत्यहिर्वृत्रः । पुनः कीदृशम् । दानुम् दानवं शयानम् शयनं कुर्वाणं जघान घातयामास । उक्तम् अन्यत् ।

'यः शम्बरं पर्यतरत् कसीभिर्योऽचारुकास्नाऽपिबत् सुतस्य ।
अन्तर्गिरौ यजमानं बहुं जनं यस्मिन्नामूर्छत् स जनास इन्द्रः ॥ १२ ॥[1]

*[यः । शम्बरम् । परिऽअतरत् । कसीभिः । यः । अचारुऽकास्ना । अपिबत् । सुतस्य ।
अन्तः । गिरौ । यजमानम् । बहुम् । जनम् । यस्मिन् । आऽअमूर्छत् । सः । जनासः । इन्द्रः ॥][2]

य इन्द्रः कशीभिः[3] दीप्तैर्वज्राद्यायुधैः स्वतेजोभिर्वा शम्बरम् असुरं पर्यतरत् पर्यतारयत् । गिरिनदीसमुद्रादिकान् सर्वानपि अत्यक्रामयद्[4] इत्यर्थः । स्वयं वा तम् असुरं पर्यतरत् । पर्यभवद् इत्यर्थः । यः च अचारुकास्ना अरमणीयेन आस्येन सुतम्[3] अभिषुतं सोमम् अपालामुखादिस्थितम् अपिबत् पानम् अकार्षीत् । 'इमं जम्भसुतं पिब धानावन्तं करम्भिणम्' (ऋ ८,९१,२) इति हि मन्त्रवर्णः । यस्मिन् इन्द्रे हन्तव्ये सति अन्तर्गिरौ पर्वतस्य मध्ये शुद्धे देवयजनप्रदेशे यजमानम् सोमयागं कुर्वाणं गृत्समदं बहुं जनम् अध्वर्युप्रभृतिं[5] सदःस्थितं जनसंघातं च आमूर्छत् आववे । चुमुरिधुनिप्रभृतिकोऽसुरसंघात इति शेषः । स जनास इन्द्र इति पूर्ववत् ।

यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत् सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद् वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥ १३ ॥

यः । सप्तऽरश्मिः । वृषभः । तुविष्मान् । अवऽअसृजत् । सर्तवे । सप्त । सिन्धून् । यः । रौहिणम् ।
अस्फुरत् । वज्रऽबाहुः । द्याम् । आऽरोहन्तम् । सः । जनासः । इन्द्रः ॥ १३ ॥

य इन्द्रः सप्तरश्मिः सप्तसंख्याकाः पर्जन्या एव रश्मयो यस्य स तादृशः । अथवा सप्तरश्मिरादित्यः । तदात्मक इत्यर्थः । वृषभः वर्षिता कामानाम् अपां वा । तुविष्मान् बलवान् सर्तवे सरणाय प्रवहणाय सप्त सर्पणशीलान् सिन्धून् स्यन्दमानान्युदकानि अवासृजत् । अवाग् यथा भवति तथा निर्मितवान् । यद्वा

---

१. तु. S [स्वराः शंपा.]; वैतु. K^m मन्त्राभावः; P,J स्वराभावः; B,B^h,V,Dc,D,R,P², S^m, Cp,K,Cs,C,E यः शंबरं परियत (परियत D; परियत R,P²; परियुत > परीयत S^m; परीयत Cp; परिभवं RW.) रक्षसीभि (छ्चीभि RW.) योवा (योवा K; योना° RW.) क्रकुत्स्ना-पिबत् (क्रकुतस्ना° Cs; क्रकुस्ना° Cp; क्रक° C,S^m; °वृतस्यापि° RW.) सुतस्य (सुतम् S, सा.)। अंतर्गिरौ यजमानं (यज° E; यछमानं RW.) वभुंजनं (बभुं° Dc; वभुंजन्नं R,Cs; च भोजनं RW.) यस्मिन्नामूर्छत्स (°ममूर्छत्स RW.) जनास इन्द्रः॥　२. पदपाठाभावः P,P²,J,Cp. ३. वैतु. मंपा.　४. अत्यकाम° S'.　५. °प्रभृति S'.

सप्त सिन्धून् सप्तसंख्याका गङ्गाद्या नदीरवासृजत् । यः च वज्रबाहुः वज्रहस्तः सन् द्याम् दिवम् आरोहन्तं रौहिणम् एतन्नामकम् असुरम् अस्फुरत् जघान । स्फुर स्फुल संचलने । तौदादिकः । अन्यद् गतम् ।

**द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते ।**
**यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ॥ १४ ॥**

द्यावा । चित् । अस्मै । पृथिवी इति । नमेते इति । शुष्मात् । चित् । अस्य । पर्वताः । भयन्ते ।
यः । सोमऽपाः । निऽचितः । वज्रऽबाहुः । यः । वज्रऽहस्तः । सः । जनासः । इन्द्रः ॥ १४ ॥

अस्मै इन्द्राय द्यावा द्यावौ पृथिवी पृथिव्यौ । परस्परापेक्षया द्विवचनम् । चित् अप्यर्थे । नमेते इन्द्रस्य महिम्ना स्वयमेव प्रह्वीभवतः । अस्य इन्द्रस्य शुष्मात् बलात् पर्वताश्चित् पर्वता अपि भयन्ते । पक्षच्छेदाद् बिभ्यति । ञिभी भये । 'बहुलं छन्दसि' ( पा २,४,७६ ) इति श्लोरभावः । यः च इन्द्रः सोमपाः सोमस्य पाता सन् निचितः प्रज्ञातः । यद्वा नितरां चितो निचितः । दृढाङ्ग इत्यर्थः । वज्रबाहुः वज्रवत् सारभूताभ्यां बाहुभ्याम् उपेतः यः च वज्रहस्तः वज्रं हस्ते धारयन् भवति स जनास इन्द्र इति ।

**यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती ।**
**यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इन्द्रः ॥ १५ ॥**

यः । सुन्वन्तम् । अवति । यः । पचन्तम् । यः । शंसन्तम् । यः । शशमानम् । ऊती ।
यस्य । ब्रह्म । वर्धनम् । यस्य । सोमः । यस्य । इदम् । राधः । सः । जनासः । इन्द्रः ॥ १५ ॥

यः सुन्वन्तम् सोमाभिषवं कुर्वन्तं यजमानम् अवति रक्षति । यः च पुरोडाशादीनि[1] हवींषि पचन्तं यः च ऊती ऊत्या रक्षणेन निमित्तेन [2]शंसन्तं स्तुवन्तं यः च[2] शशमानम् सामभिः स्तोत्रं कुर्वाणं रक्षति । ब्रह्म परिवृढं स्तोत्रं यस्य वर्धनम् वृद्धिकरं भवति । तथा यस्य सोमो वृद्धिहेतुर्भवति । यस्य च इदम्[3] अस्मदीयं राधः पुरोडाशादिलक्षणम् अन्नं वृद्धिकरं भवति । स जनास इन्द्र इति ।

**[4]जातो व्यख्यत्[5] पित्रोरुपस्थे[6] [7]भुवो न[7] वेद[8] जनितुः[9] परस्य[10] ।**

---

१. पुरोडाशादीन् S'. २. शंसन्तं स्तुवन्तं य नास्ति S'. ३. स इंद्रं S'. ४. S, सा. अनुसृत्य मंपा. ५. व्यख्यत् B,Bh,P². व्यक्तः C; व्यक्तः Sm,Cs,P,RW.; व्यक्तः J; व्यक्तः > व्यख्यत् Dc; व्यक्षत् D; व्यक्ष्यत् E; व्यक्षः R; व्यख्यन् Cp. ६. °रुप-स्थे P². ७. भुवन P, पुत्रो न RW. ८. वेद B,Bh,C,R,Sm,Cs,P; वेद D; वेद > वेद Dc. ९. जनितुः B,Bh,C,D,R,Sm,P; जनितुः > जनितुः Dc. १०. परस्य मूको.

[1]स्तविष्यमाणो नो यो[1] अस्मद्[2] व्रता[3] देवानां स जनास इन्द्रः ॥१६॥

*[ जातः । वि । अख्यत् । पित्रोः । उपस्थे । भुवः । न । वेद । जनितुः । परस्य ।
स्तविष्यमाणः । नो इति । यः । अस्मद् । व्रता । देवानाम् । सः । जनासः । इन्द्रः ॥][4]

य इन्द्रो जातः प्रादुर्भूतमात्र एव सन् पित्रोः द्यावापृथिव्योः उपस्थे उत्सङ्गे तयोर्मध्ये व्यख्यत् विख्यातवान् प्रकाशितोभूत् । यश्च इन्द्रः भुवः भुवं मातृभूतां न वेद न जानाति । तथा परस्य उत्कृष्टस्य जनितुः उत्पादयितुः परम् उत्पादकं पितृस्थानीयं द्युलोकमपि न वेद न जानाति । तयोर्वस्तुतः स्वजननं प्रति अकारणत्वाद् इत्यभिप्रायः । यद्वा भुवो जनितुः[5] भूम्या उत्पादकस्य परस्य [6]अन्यस्य स्वरूपं भुवो[6] जनितारं परम् अन्यम् इति वा व्याख्येयम् । न वेद न जानाति । स्वातिरेकेणेति शेषः । स्वस्यैव सर्वकारणत्वाद् इत्यभिप्रायः । किं च अस्मत् अस्मत्तः अस्माभिः कविष्यमाणः[7] स्तविष्यमाणः स्तूयमानश्च सन् । [7]नशब्दः चार्थे । देवानां व्रता व्रतानि कर्माणि देवार्थान् आ । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । आ पूरयति । स जनास इन्द्र इति ।

यः सोमकामो[8] [9]हर्यश्वः सूरिर्यस्माद्[9] रेजन्ते भुवनानि विश्वा ।
यो जघान शम्बरं यश्च[10] शुष्णं[11] य एकवीरः[12] स जनास इन्द्रः ॥१७॥

*[यः । सोमऽकामः । हरिऽअश्वः । सूरिः । यस्मात् । रेजन्ते । भुवनानि । विश्वा ।
यः । जघान । शम्बरम् । यः । च । शुष्णम् । यः । एकऽवीरः । सः । जनासः । इन्द्रः ॥१७॥][4]

य इन्द्रः सोमकामः सोमं कामयमानः सन् हर्यश्वसूरिः[9] हर्याख्यानाम् अश्वानां सुष्ठु ईरयिता प्रेरयिता भवति यागप्रदेशस्यागमनायेति शेषः । अथवा यः सोमकामः यश्च हर्यश्वः सूरिर्विद्वांश्च । किं च यस्माद् इन्द्राद् विश्वा विश्वानि भुवनानि भूतजातानि रेजन्ते बिभ्यति । य इन्द्रः शम्बरम् असुरं जघान । यः च

---

१. कविष्य° S, सा.; °माणोन्नोजो B,B[h],C,D,E,Cp; °माणोन्नोयो R,S[m],Dc,Cs,P,P[2]; °माणोन्नोयो J; °माणो नो जो S; तविष्यमाणोऽनु यो RW. २. अस्माद् P; अस्थाद् RW. ३. व्रता > वर्ता C. ४. पपा. अभावः P,P[2],J,Cp ५. जनितः S'. ६. अन्नस्य स्वरूप भवो S'. ७. वैतु. मंपा. ८. सोम् कामो C. ९. हर्येश्वसूरि° S, सा.; हर्यैश्वासुरि° B[h],R,P[2],Cp; हर्येःश्वासुरि° D; हर्येश्वासुरि° E; हर्यैश्वा आसुरि° Cs,P; हर्यैश्वा सुरि° J,RW.; हर्यैश्व आसुरि° > हर्यैश्वासूरि° Dc; हर्यैश्वासूरि° K,V; हर्यैश्वासुरि° > हर्यैश्व आसुरि° S[m]; हर्यैश्व आसुरि° C; हर्यैश्व आसुतेर्यस्मा° RW.; हर्यैश्व आसुरि° E[2],I. १०. यस्य B[h],R,D,S[m],E,K,V,Cs,P,J,E[2]I; यस्यं C. ११. शुष्णं C; मुष्णं E[2],I. १२. एकंवीरः B[h],R,Dc,K,V; एकंवीरः E,Cp,P[2],K,V; एकंवीरः > एकवीरः Dc.

शुष्णम् असुरं जघान घातयामास । यः च एवंविधेषु असाधारणेषु व्यापारेषु एकवीरः असाधारणः शूरो भवति स जनास इन्द्र इति उक्तार्थः ।

यः सुन्वते पचते दुध्र आ चिद् वाजं दर्दर्षि स किलासि सत्यः ।
वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥ १८ ॥

यः । सुन्वते । पचते । दुध्रः । आ । चित् । वाजम् । दर्दर्षि । सः । किल । असि । सत्यः ।
वयम् । ते । इन्द्र । विश्वह । प्रियासः । सुऽवीरासः । विदथम् । आ । वदेम ॥ १८ ॥

अत्र ऋषिः इन्द्रस्य अविद्यमानतां शङ्कमानानाम् अज्ञानिनां विश्वासं जनयन् इन्द्रं प्रत्यक्षीकृत्य ब्रूते — हे इन्द्र यः त्वं दुध्रश्चित् वस्तुतो दुर्धर्षोऽपि सुन्वते सोमाभिषवं कुर्वते यजमानाय तथा पचते पशुपुरोडाशादिहविःपाकं कुर्वते च यजमानाय वाजम् तदभिमतम् अन्नम् आ दर्दर्षि सर्वतो भृशं प्रयच्छसि । दृ गतौ । अस्मात् क्रियासमभिहारे यङ् । उरदत्वे हलादिशेषे च अभ्यासस्य 'रुग्रिकौ च लुकि' ( पा ७,४,९१ ) इति रुगागमः । यद्योगाद् अनिघातः । 'अभ्यस्तानाम् आदिः' ( पा ६,१,१८९ ) इत्याद्युदात्तः । स तादृशस्त्वं सत्यः किलासि । मन्त्रद्रष्टुर्महर्षेः प्रत्यक्षत्वेऽपि इदानींतनानां कथं तस्य प्रत्यक्षतेति शङ्कायां यष्टॄणाम् अभिमतान्नलक्षणफलस्य सत्यदृष्टत्वाद् इन्द्रोऽपि सत्य एवेत्यभिप्रायेण स किलासि सत्य इति ब्रूते । वयं विश्वह विश्वेष्वपि अहःसु सर्वदा । 'सुपां सुलुक्' ( पा ७,१,३९ ) इत्यादिना सप्तमीबहुवचनस्य लुक् । शकन्ध्वादित्वात् पररूपत्वम् । कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । हे इन्द्र ते तव प्रियासः प्रियाः सन्तः सुवीरासः शोभनपुत्रादियुक्ताश्च सन्तः विदथम् वेदनसाधनं स्तोत्रम् आ वदेम ब्रूयाम ।

इति चतुर्थेऽनुवाके प्रथमं सूक्तम् ।

चतुर्विंशेऽभिजिति विषुवति विश्वजिति महाव्रते च ब्राह्मणाच्छंसिशस्त्रे 'अस्मा इदु प्र तवसे तुराय' इति अहीनसूक्तसंज्ञकं विनियुक्तम् । ''चतुर्विंश 'इन्द्रमिद्गाथिनो बृहद्' ( अ २०,३८,४ ) इत्याज्यस्तोत्रियः'' इति प्रक्रम्य सूत्रितम् — '' 'अभि प्र वः सुराधसम्' ( अ २०,५१,१ ), 'प्र सु श्रुतं सुराधसम्' ( अ २०,५१,३ ) इति पृष्ठस्तोत्रियानुरूपौ बार्हतौ प्रगाथौ । 'मा चिदन्यद् वि शंसत' ( अ २०,८५,१ ), 'यच्चिद्धि त्वा जना इमे' ( अ २०,८५,३ ) इति वा । 'अस्मा इदु प्र तवसे तुराय' ( अ २०,३५ ) इत्यहीनसूक्तम्[1] आवपते'' ( वैताश्रौ ३१,१६;१८;१९ ) इति ।

तथा अप्तोर्याम्णि माध्यंदिनसवने तच्छस्त्र एव विनियुक्तम् । सूत्रितं हि 'अप्तोर्याम्णि गर्भकारं शंसति' इति प्रक्रम्य — ''[2]सुकीर्तिं वृषाकपिं[2] सामसूक्तम् अहीनसूक्तम् आवपते' ( वैताश्रौ २७,१८;२४ ) इति ।

---

१. हीन नास्ति S'.   २. सुकीर्तिर्वृषाकपी RG.

अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय।
ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा ॥ १ ॥

अस्मै। इत्। ऊं इति। प्र। तवसे। तुराय। प्रयः। न। हर्मि। स्तोमम्। माहिनाय।
ऋचीषमाय। अध्रिऽगवे। ओहम्। इन्द्राय। ब्रह्माणि। रातऽतमा ॥ १ ॥

अस्मा इदु। इद् उ इति निपातद्वयं पादपूरणम्। 'अथापि ××× पदपूरणाः ××× कमीमिद्विति' ( नि १,९ ) इति यास्कोक्तेः। अवधारणार्थं वा निपातद्वयम्। अस्मा एव इन्द्राय ओहम् वहनीयं प्रापणीयं स्तोमम् स्तोत्रं प्र हर्मि प्रकर्षेण हरामि। प्रकरोमीत्यर्थः। कीदृशायेन्द्राय। तवसे प्रवृद्धाय बलवते वा तुराय सोमपानार्थं त्वरमाणाय शत्रुहिंसकाय वा माहिनाय। महन्नामैतत्। गुणैर्महते ऋचीषमाय ऋचा स्तुतिसाधनया समाय। ऋग् यादृग्रूपं प्रतिपादयति तादृग्रूप एव तत्र संमितो भवतीत्यृचीषम इत्यर्थः। अथवा ऋक् स्तुतिः तया समाय। वस्तुतः अपरिमेयगुणत्वेऽपि ऋचा[1] परिच्छिद्यते इत्यृचीषमत्वाभिधानम्। अध्रिगवे अधृतगमनकर्मणे अप्रतिहतगमनाय इन्द्राय। स्तोत्रप्रेरणे दृष्टान्तम् आह — प्रयो न इति। प्रय इत्यन्ननाम। यथा क्षुधितस्य अन्नं प्रेरयति तद्वत् स्तुतिकामाय स्तोमं प्रहर्मीत्यर्थः। न केवलं स्तोत्रम् अपि तु राततमा राततमानि पूर्वैर्यजमानैरत्यर्थं दत्तानि ब्रह्माणि प्रवृद्धानि सोमादिहवींष्यपि प्र हर्मीति। अध्रिगव इत्यत्र अधृतः अन्येनानिवारितः गौर्गमनम् अस्येति तस्यावयवार्थः। 'गोस्त्रियोरुपसर्जनस्य' ( पा १,२,४८ ) इति ह्रस्वत्वम्। पृषोदरादित्वाद् अधृतशब्दस्य अध्रिभावः। ओहम् इति। वहतेः कर्मणि घञि छान्दसं संप्रसारणम्।

अस्मा इदु प्रयं इव प्र यंसि भराम्याङ्गूषं बाधे सुवृक्ति।
इन्द्राय हृदा मनसा मनीषा प्रत्नाय पत्ये धियो मर्जयन्त ॥ २ ॥

अस्मै। इत्। ऊं इति। प्रयःऽइव। प्र। यंसि। भरामि। आङ्गूषम्। बाधे। सुऽवृक्ति।
इन्द्राय। हृदा। मनसा। मनीषा। प्रत्नाय। पत्ये। धियः। मर्जयन्त ॥ २ ॥

अस्मा इदु अस्मा एव इन्द्राय प्रय इव अन्नमिव प्र यंसि प्रयच्छामि। यम उपरमे। अस्माल्लटि पुरुषव्यत्ययः। 'बहुलं छन्दसि' ( पा २,४,७३ ) इति शपो लुक्। सामान्येनोक्तं विशिनष्टि भरामि इत्यादिना — बाधे शत्रूणां बाधनाय सुवृक्ति सुष्ठु आवर्जकम्[2] आङ्गूषम् स्तोत्ररूपम् आघोषम्। 'आङ्गूषः स्तोम आघोषः' ( नि ५,११ ) इति यास्कः। भरामि संपादयामि। किं च प्रत्नाय पुराणाय

---

1. ऋच्या S'. 2. आ नास्ति S'.

पत्ये सर्वस्य स्वामिने इन्द्राय अन्येऽपि ऋत्विजो हृदा हृदयेन मनसा हृदयान्तर्वर्तिना अन्तःकरणेन मनीषा मनीषया बुद्धया धियः स्तुतीः मर्जयन्त मार्जयन्ति संस्कुर्वन्ति ।

अस्मा इदु त्यमुपमं स्वर्षां भराम्याङ्गूषमास्येन ।
मंहिष्ठमच्छोक्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै ॥ ३ ॥

अस्मै । इत् । ऊं इति । त्यम् । उपऽमम् । स्वःऽसाम् । भरामि । आङ्गूषम् । आस्येन । मंहिष्ठम् । अच्छोक्तिऽभिः । मतीनाम् । सुवृक्तिऽभिः । सूरिम् । ववृधध्यै ॥ ३ ॥

अस्मा इदु अस्मा एव इन्द्राय त्यं तं प्रसिद्धम् उपमम् । उपमीयते अनेनेत्युपमः । उपमास्थानभूतम् । 'घनर्थे कविधानम्' ( पावा ३,३,५८ ) इति करणे कप्रत्ययः । 'आतो लोप इटि च' ( पा ६,४,६४ ) इत्याकारलोपः । स्वर्षाम् सुष्ठु अरणीयस्य धनस्य दातारं स्वर्गस्य प्रापकं वा एवंलक्षणम् आङ्गूषम् स्तोत्रलक्षणम् आघोषम् आस्येन मुखेन भरामि संपादयामि । किमर्थम् । मंहिष्ठम् अतिशयेन धनवन्तम् अतिशयेन प्रवृद्धं वा सूरिम् सुष्ठु धनस्य ईरयितारं विपश्चितं वा उक्तलक्षणम् इन्द्रं ववृधध्यै वर्धयितुं मतीनाम् स्तुतीनां संबन्धिभिः । कैः साधनैः । सुवृक्तिभिः सुष्ठु आवर्जकैः अच्छोक्तिभिः स्वच्छवचनैः । आङ्गूषं भरामीति संबन्धः ।

अस्मा इदु स्तोमं सं हिनोमि रथं न तष्टेव तत्सिनाय ।
गिरश्च गिर्वाहसे सुवृक्तीन्द्राय विश्वमिन्वं मेधिराय ॥ ४ ॥

अस्मै । इत् । ऊं इति । स्तोमम् । सम् । हिनोमि । रथम् । न । तष्टाऽइव । तत्ऽसिनाय । गिरः । च । गिर्वाहसे । सुऽवृक्ति । इन्द्राय । विश्वम्ऽइन्वम् । मेधिराय ॥ ४ ॥

अस्मा इदु अस्मा एव इन्द्राय तत्सिनाय तदेव सिनं सोमादिलक्षणम् अन्नं यस्य तादृशाय इन्द्राय अथवा तत्सिनाय रथसाध्यान्नवते स्वामिने तष्टा शिल्पी रथं न यथा रथं संहिनोति तद्वत् स्तोमं संहिनोमि इति । किं च गिर्वाहसे गीर्भिः प्रापणीयाय मेधिराय । मेधो यज्ञः । यज्ञार्हाय मेधाविने वा इन्द्राय सुवृक्ति सुष्ठु आवर्जकं विश्वमिन्वम् विश्वैः सर्वैः प्राप्तव्यं विश्वैः सर्वैर्यजमानैः प्रापणीयं वा सोमादिलक्षणं[1] हविः गिरश्च स्तुत्यर्थानि वचांसि च । सं हिनोमीत्यनुषङ्गः । यद्वा सुवृक्ति विश्वमिन्वम् इति पदद्वयं फलपरतया व्याख्येयम् । सुष्ठु आवर्जनीयं विश्वैर्बन्ध्वादिभिः[2] प्राप्तव्यम् उपभोक्तव्यम् । अन्नम् । लब्धुम् इत्यध्याहारः ।

अस्मा इदु सप्तिमिव श्रवस्येन्द्रायार्कं जुह्वा३ समञ्जे ।
वीरं दानौकसं वन्दध्यै पुरां गूर्तश्रवसं दर्माणम् ॥ ५ ॥

---

१. स्तोमादि° S'. २. °बैध्वादि° S'.

अस्मै । इत् । ऊं इति । सप्तिम्ऽइव । श्रवस्या । इन्द्राय । अर्कम् । जुह्वा । सम् । अञ्जे ।
वीरम् । दानऽओकसम् । वन्दध्यै । पुराम् । गूर्तऽश्रवसम् । दर्माणम् ॥ ५ ॥

अस्मा इदु **अस्मा एव** इन्द्राय श्रवस्या **श्रवस्यया । श्रव इत्यन्ननाम । अन्नेच्छया । अन्नलाभायेत्यर्थः । श्रवःशब्दात्** 'सुप आत्मनः क्यच्' ( पा ३,१,८ ) । **तदन्ताद्धातोर्भावे** 'अ प्रत्ययात्' ( पा ३,३,१०२ ) **इत्यकारप्रत्ययः । ततष्टाप् ।** 'सुपां सुलुक्॰' ( पा ७,१,३९ ) **इति तृतीयाया डादेशः । उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम् ।** अर्कम् **अर्चनीयम् अन्नं हविर्लक्षणम् अन्नं** जुह्वा **आज्यपूर्णया** समञ्जे **समक्तं करोमि । व्यत्ययेनात्मनेपदम् । यद्वा अर्कं स्तुतिसाधनं मन्त्रम् ।** 'अर्को मन्त्रो भवति । यदनेनार्चन्ति' ( नि ५,४ ) **इति यास्कः । जुह्वा जुहूवद् अञ्जनसाधनया जिह्वया समञ्जे संयोजयामि । तत्र दृष्टान्तः —** सप्तिमिव **अश्वमिव । जातावेकवचनम् । अश्वान् यथा श्रवस्यया रथे समक्तान् संगतान् करोति तद्वत् । किं च** वीरम् **शत्रूणां विविधम् ईरयितारं** दानौकसम् **दानानाम् ओकः सद्मस्थानीयं** पुराम् **असुरनगराणां** दर्माणम् **दारकं** गूर्तश्रवसम् । **श्रव इत्यन्ननाम । प्रशस्यान्नं प्रशस्यकीर्तिं वा उक्तलक्षणम् इन्द्रं** वन्दध्यै **वन्दितुम् । आह्वयामीति शेषः ।**

**अस्मा इदु त्वष्टा तक्षद् वज्रं स्वपस्तमं स्वर्यं[१] रणाय ।**
**वृत्रस्य चिद् विदद् येन मर्म तुजन्नीशानस्तुजता कियेधाः ॥ ६ ॥**

अस्मै । इत् । ऊं इति । त्वष्टा । तक्षत् । वज्रम् । स्वपःऽतमम् । स्वर्यम् । रणाय ।
वृत्रस्य । चित् । विदत् । येन । मर्म । तुजन् । ईशानः । तुजता । कियेधाः ॥ ६ ॥

अस्मा इदु **अस्मा एवेन्द्राय** त्वष्टा **सकलजगन्निर्माता विश्वकर्मा** वज्रम् **एतन्नामकम् आयुधं** तक्षत् **अतक्षत् निर्मितवान् । कीदृशम् ।** स्वपस्तमम् **अतिशयेन शोभनकर्माणं** स्वर्यम् **स्वायत्तवीर्यं स्तुत्यं वा । किमर्थम् ।** रणाय **युद्धाय ।** तुजता **हिंसता** येन **वज्रेण** कियेधाः । **कियत् किंपरिमाणमित्यस्य बलस्य तादृग् बलं दधाति धारयतीति कियेधाः । यद्वा क्रममाणान् शत्रून् धारयति निगृह्णातीति कियेधाः । परैरपरिच्छेद्यबल इत्यर्थः ।** 'कियेधाः कियद्धा इति वा क्रममाणधा इति वा' ( नि ६,२० ) **इति यास्कः । पृषोदरादित्वात् पूर्वपदस्य कियेभावः । दधातेर्विच्प्रत्ययः ।** ईशानः **सर्वस्य स्वामी भवन् इन्द्रः** वृत्रस्य चित् **सर्वावरकस्य प्रबलस्य वृत्रस्याप्यसुरस्य** मर्म । **यस्मिन् स्थाने विद्धः सद्यो म्रियते तद् मर्म । तत्** तुजन् **हिंसन् व्यथयन्** विदत् **अविदत् लब्धवान् । लब्ध्वा** '**प्राहार्षीद् इत्यर्थः**[२] **। विद्लृ लाभे । लुङि लृदित्त्वात् च्लेः अङ् आदेशः ।** 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा ६,४,७५ ) **इत्यडभावः । यद्वृत्तयोगाद् अनिघातः ।**

---

१. षष्ठीसमासे स्वरः?  २. 'र्षीरित्य' S'.

अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवां चार्वन्ना ।
मुषायद् विष्णुः पचतं सहीयान् विध्यद् वराहं तिरो अद्रिमस्ता ॥७॥

अस्य । इत् । ऊं इति । मातुः । सवनेषु । सद्यः । महः । पितुम् । पपिऽवान् । चारु । अन्ना ।
मुषायत् । विष्णुः । पचतम् । सहीयान् । विध्यत् । वराहम् । तिरः । अद्रिम् । अस्ता ॥७॥

अस्येदु अस्यैवेन्द्रस्य मातुः सर्वस्य निर्मातुः महः महतः माहात्म्यवतः एवंभूतस्य इन्द्रस्य । असाधारणं कर्म उच्यते इति शेषः । यद्वा उक्तलक्षणस्य यज्ञस्येति व्याख्येयम् । किं तत् कर्मेति उच्यते — अयम् इन्द्रः सवनेषु सोमयागसंबन्धिषु प्रातरादिषु त्रिषु सवनेषु सद्यः तदानीमेव होमसमय[1] एव पितुम् । अन्ननामैतत् । पातव्यं सोमं पपिवान् पीतवान् । किं च चारु चारूणि । 'सुपां सुलुक्' ( पा ७,१,३९ ) इति विभक्तेर्लुक् । अन्ना अन्नानि सवनीयपुरोडाशधानाकरम्भादीनि । भक्षितवान् इति शेषः । किं च विष्णुः सवनत्रयव्यापी इन्द्रः सहीयान् अतिशयेन शत्रूणाम् अभिभविता । सोमपानादिजनितेन बलेनेति भावः । पचतम् परिपक्वम् अपहारयोग्यभूतं शत्रूणां धनं मुषायत् अपाहरत् । क्यजन्ताल्लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा ६,४,७५ ) इत्यडभावः । तथा अद्रिम् अस्ता अद्रेर्वज्रस्य क्षेपकः प्रयोक्ता स इन्द्रः वराहम् । 'वराहो मेघो भवति । वराहारः' इति निरुक्तम् ( ५,४ ) । वराहारम् उत्कृष्टस्योदकस्य आहर्तारं धारकं मेघं तिरः प्राप्तः सन् । 'तिरः सत इति प्राप्तस्य' ( नि ३,२० ) इति यास्कः । विध्यत् अविध्यत् वृष्टिलाभार्थं व्यदारयत् ।

अस्मा इदु ग्नाश्चिद् देवपत्नीरिन्द्रायार्कमहिहत्य ऊवुः ।
परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानं परि ष्टः ॥ ८ ॥

अस्मै । इत् । ऊं इति । ग्नाः । चित् । देवऽपत्नीः । इन्द्राय । अर्कम् । अहिऽहत्ये । ऊवुरित्यूवुः ।
परि । द्यावापृथिवी इति । जभ्रे । उर्वी इति । न । अस्य । ते इति । महिमानम् । परि ।
स्त इति स्तः ॥ ८ ॥

अस्मा इदु अस्मा एव इन्द्राय अहिहत्ये । अहिर्वृत्रः । तस्य हनने निमित्तभूते सति देवपत्नीः देवानां पालयित्र्यो गायत्र्याद्याः ग्नाश्चित् गमनस्वभावा अपि अर्कम् अर्चनसाधनं स्तोत्रम् ऊवुः अतन्वत । यद्वा अस्मा इन्द्राय ग्नाश्चित् । 'मेना ग्ना इति स्त्रीणाम्' इति निरुक्तम् ( ३,२१ ) । 'ग्ना गच्छन्त्येनाः' इति तत्रत्यं निर्वचनम् । स्वस्वपतिभिरभिगन्तव्याः स्त्रियः । ता विशिनष्टि — देवपत्नीरिति । देवा इन्द्राद्याः पतयो यासां ता देवपत्न्यः । ताश्च 'उत ग्ना व्यन्तु देवपत्नीः' ( ऋ ५,४६,८ ) इति

---

१. होमसमसमय S'.

मन्त्रोक्ता इन्द्राण्यग्नाय्यश्विन्याद्याः । ता देवपत्न्यः अर्कम् अर्चनसाधनं हविः ऊवुः स्वात्मनि अतन्वत । वेञ् तन्तुसंताने । लिटि 'वेञो वयिः' ( पा २,४,४१ )। लिटः कित्त्वाद् यजादित्वेन संप्रसारणे यकारस्य 'लिटि वयो यः' ( पा ६,१,३८ ) इति प्रतिषेधाद् वकारस्य संप्रसारणम्। परपूर्वत्वे[1] द्विर्वचनादि। 'वश्चास्यान्यतरस्यां किति' ( पा ६,१,३९ ) इति यकारस्य वकारादेशः । स चेन्द्रः उर्वी विस्तृते द्यावापृथिवी द्यावापृथिव्यौ परि जभ्रे स्वतेजसा परिजहार । अतिचक्रामेत्यर्थः । अस्य इन्द्रस्य महिमानम् महत्त्वं ते द्यावापृथिव्यौ न परि ष्टः न पराभवतः । महत्त्व-संकोचं कर्तुं शक्ते नाभूताम् इत्यर्थः ।

अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्याः पर्यन्तरिक्षात् ।
स्वराळिन्द्रो[2] दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥ ९ ॥

अस्य । इत् । एव । प्र । रिरिचे । महिऽत्वम् । दिवः । पृथिव्याः । परि । अन्तरिक्षात् ।
स्वऽराट् । इन्द्रः । दमे । आ । विश्वऽगूर्तः । सुऽअरिः । अमत्रः । ववक्षे । रणाय ॥ ९ ॥

अस्येदेव[3] अस्यैवेन्द्रस्य महित्वम् महत्त्वं माहात्म्यं दिवः द्युलोकात् परि उपरि प्र रिरिचे। अत्र प्रेत्युपसर्गो धात्वर्थं बाधते। प्रस्मरणं प्रस्थानम् इतिवत्। अधिकं भवतीत्यर्थः । तथा पृथिव्याः परि भूलोकादप्युपरि प्र रिरिचे । एवम् अन्तरिक्षात् द्यावापृथिव्योरन्तरालवर्तिनो यक्षगन्धर्वाप्सरःप्रभृतीनाम् आश्रयभूताद् अन्तरिक्षलोकादपि प्र रिरिचे । रिचिर् विरेचने । 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ ) इति वर्तमाने लिट् । किं च अयम् इन्द्रो दमे दमयितव्ये शत्रुजने स्वराट् स्वेनैव तेजसा राजमानः। विश्वगूर्तः विश्वस्मिन् सर्वस्मिन्नपि कार्ये उद्गूर्ण-बलः । स्वरिः सुष्ठु अभिगन्ता । यद्वा स्वरिः शोभनः इन्द्रव्यतिरिक्तेनान्येन पराभवितुम् अशक्यः शत्रुः सुशब्देन उच्यते। तादृशेन अरिणा उपेतः । अमत्रः युद्धार्थं गमनकुशलः। अम गत्यादिषु। 'अमिनक्षियजिवधि[4]' ( पाउ ३,१०५ ) इत्यादिना अत्रन्प्रत्ययः । एवंमहानुभाव इन्द्रो रणाय रमणीयाय संग्रामाय आ ववक्षे आवहति वृष्ट्यर्थं मेघान् प्रापयति। वहेर्लेटि 'सिब्बहुलं लेटि' ( पा ३,१,३४ ) इति सिप्। 'बहुलं छन्दसि' ( पा २,४,७६ ) इति शपः श्लुः। ढत्वकत्वषत्वानि । 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) इति तलोपः।

अस्येदेव शवसा शुषन्तं वि वृश्चद् वज्रेण वृत्रमिन्द्रः ।
गा न व्राणा अवनीरमुञ्चदभि श्रवो दावने सचेताः ॥ १० ॥

अस्य । इत् । एव । शवसा । शुषन्तम् । वि । वृश्चत् । वज्रेण । वृत्रम् । इन्द्रः ।

---

१. °पूर्वत्व° S'. २. स्वराळिन्द्रो K,K^m,V, ऋ १,६१,९; स्वराडिन्द्रो B^h,C,Cs.
३. अस्येदु S'. ४. °बंधि S'.

गाः । न । व्राणाः । अवनीः । अमुञ्चत् । अभि । श्रवः । दावने । सऽचेताः ॥ १० ॥

अस्येदेव[1] अस्यैव इन्द्रस्य शवसा बलेन तेजसा शुषन्तम् शुष्यन्तम् । शुष शोषणे । श्यनि प्राप्ते व्यत्ययेन शः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वर एव शिष्यते । उक्तरूपं वृत्रम् इन्द्रो देवः वज्रेण आयुधेन वि वृश्चत् व्यच्छिनत् । तथा गा न पणिभिरपहृता गा यथा अमुञ्चत् मोचितवान् एवं व्राणाः वृत्रेण आवृता अपः । वृञ् वरणे । कर्मणि लट् । शानचि 'बहुलं छन्दसि' ( पा २,४,७३ ) इति यको लुक् । शानचो ङित्त्वाद् गुणाभावे यण् आदेशः । कीदृशीरपः । अवनीः अवित्रीः सकलप्राणिरक्षणहेतुभूता अमुञ्चत् मेघं भित्त्वा अवर्षीत् । तथा कृत्वा दावने हविर्दात्रे यजमानाय श्रवः सर्वैः श्रूयमाणं विख्यातम् अन्नं सचेताः यजमानेन समानचित्तः सन् अभि । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । अभ्यगमयत् । अथवा आभिमुख्येन । प्रायच्छद् इति शेषः ।

अस्येदु त्वेषसा रन्त सिन्धवः परि यद् वज्रेण सीमयच्छत् ।
ईशानकृद् दाशुषे दशस्यन् तुर्वीतये गाधं तुर्वणिः कः ॥ ११ ॥

अस्य । इत् । ऊं इति । त्वेषसा । रन्त । सिन्धवः । परि । यत् । वज्रेण । सीम् । अयच्छत् ।
ईशानऽकृत् । दाशुषे । दशस्यन् । तुर्वीतये । गाधम् । तुर्वणिः । करिति कः ॥ ११ ॥

अस्येदु अस्यैवेन्द्रस्य त्वेषसा दीप्तेन बलेन सिन्धवः स्यन्दनशीला नद्यो रन्त अरन्त स्वेस्वे स्थाने रमन्ते । यत् यस्मात् कारणाद् अयम् इन्द्रो वज्रेण सीम् सर्वतः एनान् सिन्धून् वज्रेण पर्ययच्छत् परितो नियमितवान् । तस्माद् रमन्त इति पूर्वत्र संबन्धः । किं च ईशानकृत् शत्रून् हत्वा आत्मानं स्वामिनं कुर्वन् अथवा दरिद्रस्य ईशानकर्ता दाशुषे हविर्दत्तवते यजमानाय दशस्यन् तदभिमतं प्रयच्छन् इन्द्रः तुर्वीतये एतत्संज्ञकाय अगाधे जले निमग्नाय तुर्वणिः तूर्णवनिः शीघ्रं संभक्ता सन् गाधम् प्रतिष्ठां कः अकः अकार्षीत् । करोतेर्लुङि 'मन्त्रे घस' ( पा २,४,८० ) इत्यादिना च्लेर्लुक् । गुणः । 'हल्ङ्या' ( पा ६,१,६८ ) इत्यादिना तलोपः ।

अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥ १२ ॥

अस्मै । इत् । ऊं इति । प्र । भर । तूतुजानः । वृत्राय । वज्रम् । ईशानः । कियेधाः ।
गोः । न । पर्व । वि । रद । तिरश्चा । इष्यन् । अर्णांसि । अपाम् । चरध्यै ॥ १२ ॥

अस्मा इदु अस्मा एव वृत्राय अस्य वृत्रस्य वधार्थं तूतुजानः अत्यर्थं त्वरमाणः अत्यर्थं शत्रून् हिंसन् वा ईशानः सर्वस्य स्वामी कियेधाः कियद् इदं

---

[1] अस्येदु S'.

शत्रुबलम् इति तुच्छीकृत्य तस्य बलस्य धारकः[1]। अथवा क्रममाणः सन् शत्रु-धारकः वज्रं प्र भर प्रहर प्रयोजय। न केवलं प्रहर किं तु शकलीकुर्वित्याह—गोर्न पर्व यथा मांसार्थिनो गोर्वृषभादेः पशोः पर्व पर्वाणि प्रतिपर्वं छिन्दन्ति तद्वत्। अर्णांसि उदकानि इष्यन् इच्छन् अपां चरध्यै चरणाय भूमौ प्रवाहाय तिरश्चा तिर्यगञ्चनेन वज्रेण वि रद विशेषेण वृत्रं विलेखय। विविधं छिन्द्धी-त्यर्थः। अत्र निरुक्तम्—'अस्मै प्रहर। तूर्णं त्वरमाणः। वृत्राय वज्रम् ईशानः। क्रियेधाः क्रियद्धा इति वा। क्रममाणधा इति वा। गोरिव पर्वाणि विरद मेघस्य। इष्यन्नर्णांसि। अपां चरणाय' (नि ६,२०) इति।

अस्येदु प्र ब्रूहि पूर्व्याणि तुरस्य कर्माणि नव्य उक्थैः।
युधे यदिष्णान आयुधान्यृघायमाणो निरिणाति शत्रून्॥ १३॥

अस्य। इत्। ऊं इति। प्र। ब्रूहि। पूर्व्याणि। तुरस्य। कर्माणि। नव्यः। उक्थैः। युधे। यत्। इष्णानः। आयुधानि। ऋघायमाणः। निऽरिणाति। शत्रून्॥ १३॥

उक्थैः[2]। उक्थं स्तुतिम् अर्हन्तीति उक्थ्यानि[3] शस्त्राणि। तैः नव्यः स्तुत्यो य इन्द्रः अस्येदु अस्यैव तुरस्य युद्धार्थं त्वरमाणस्येन्द्रस्य पूर्व्याणि पुराणानि कर्माणि एत-त्कृतानि बलकर्माणि हे स्तोतः प्र ब्रूहि प्रशंस। यत् यदा युधे योधनाय आयुधानि वज्रादीनि इष्णानः आभीक्ष्ण्येन प्रेरयन्। इष आभीक्ष्ण्ये। क्रैयादिकः। व्यत्ययेन आत्मनेपदम्। शानचश्चित्त्वाद् अन्तोदात्तत्वम्। शत्रून् ऋघायमाणः हिंसंश्च इन्द्रः निरिणाति अभिमुखं गच्छति। तदानीं प्र ब्रूहीति पूर्वेण संबन्धः। निरिणाति। री गतिरेष-णयोः। 'क्र्यादिभ्यः श्ना' (पा ३,१,८१)। 'प्वादीनां ह्रस्वः' (पा ७,३,८०) इति ह्रस्वत्वम्। तिपः पित्त्वाद् अनुदात्तत्वे विकरणस्वरः शिष्यते। 'तिङि चोदात्तवति' (पा ८,१,२८) इति गतेर्निघातः। यद्वृत्तयोगात् 'तिङ्ङतिङः' (पा ८,१,२८) इति निघाताभावः।

अस्येदु भिया गिरयश्च दृळ्हा[4] द्यावा च भूमा जनुषस्तुजेते।
उपो वेनस्य जोगुवान ओणिं सद्यो भुवद् वीर्याय नोधाः॥ १४॥

अस्य। इत्। ऊं इति। भिया। गिरयः। च। दृळ्हाः। द्यावा। च। भूम। जनुषः। तुजेते इति। उपो इति। वेनस्य। जोगुवानः। ओणिम्। सद्यः। भुवत्। वीर्याय। नोधाः॥

अस्यैव अस्येदु इन्द्रस्य जनुषः जन्मतः प्रादुर्भावत एव। यद्वा जनुषः उत्कृष्ट-जन्मवतोऽस्येति व्याख्येयम्। भिया पक्षच्छेदनभयेन गिरयश्च पर्वता अपि दृळ्हा[5] दृढानि अप्रच्यावितानि अभूवन्। पर्वतद्रव्यसामान्यापेक्षया नपुंसकलिङ्गता। किं

---

1. धारकम् S'. 2. वैतु. मंपा. 3. उक्थानि S'. 4. दृळ्हा K,K^m, V, ऋ १,६१,१४; दृढा B^h,Cs. 5. वैतु. पपा.

च अस्य भिया द्यावा च भूमा च द्यावापृथिव्यावपि तुजेते। तुजिर्हिंसार्थोऽपि अत्र कम्पने वर्तते। कम्पेते इत्यर्थः । अत्र मध्ये चशब्दस्य पाठश्छान्दसः। 'दिवो द्यावा' ( पा ६,३,२९ ) इति दिव्शब्दस्य द्यावादेशः । 'सुपां सुलुक्' ( पा ७,१,३९ ) इति डादेशः । 'देवताद्वन्द्वे च' ( पा ६,२,१४१ ) इत्युभयपदप्रकृतिस्वरत्वम् । पदद्वय-प्रसिद्धिरपि सांप्रदायिकी । किं च वेनस्य कान्तस्य ओणिम् दुःखस्यापनोदकं रक्षणम् । ओणृ अपनयने इत्यस्माद् औणादिक इप्रत्ययः। जोगुवानः अनेकैः सूक्तैः शब्दयन् नोधाः नवनस्य स्तवस्य धारयिता एतन्नामा महर्षिः वीर्याय सामर्थ्याय सद्यः तदानीमेव उपो उपैव समीप एव भुवत् भवेत् अभवत् । वीर्यवान् अभवद् इत्यर्थः ।

अस्मा इदु त्यदनु दाय्येषामेको यद् वव्ने भूरेरीशानः ।
प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये[1] सुष्विमावदिन्द्रः ॥ १५ ॥

अस्मै । इत् । ऊं इति । त्यत् । अनु । दायि । एषाम् । एकः । यत् । वव्ने । भूरेः । ईशानः । प्र । एतशम् । सूर्ये । पस्पृधानम् । सौवश्व्ये । सुस्विम् । आवत् । इन्द्रः ॥ १५ ॥

अस्मा इदु अस्मा एवेन्द्राय त्यत् तत् प्रसिद्धं स्तोत्रं सोमलक्षणम् अन्नं वा अनु आनुलोम्येन दायि अदायि दीयते। अस्मा एवेत्युक्तं तत्र कारणम् आह— यत् यस्मात् कारणाद् भूरेः प्रभूतस्य धनस्य हविषः स्तोत्रस्य वा ईशानः स्वामी इन्द्रः एकः स्तोत्रादिविषये केवलः असाधारणः सन् वव्ने । असाधारण्यं याचितवान् इत्यर्थः । किं च अयम् इन्द्रः सौवश्व्ये स्वश्वस्यापत्ये एतन्नामके राजनि रक्षणीयत्वेन निमित्तभूते सति सूर्ये देवे पस्पृधानम् सौवश्व्यसहायत्वेन पुनःपुनः स्पर्धमानम् । स्पर्ध संघर्षे । अस्माल्लिटः कानच् । द्विर्वचने 'शर्पूर्वाः खयः' ( पा ७,४,६१ ) इति पकारः शिष्यते । धात्वकारस्य लोपो रेफस्य संप्रसारणं च पृषोदरादित्वात्। चित्त्वाद् अन्तोदात्तत्वम्। एतशम् एतन्नामानं महर्षिं सुष्विम् सुष्ठु इन्द्रार्थं सोमाभिषवं कुर्वाणं प्रावत् प्रकर्षेण रक्षितवान् । यद्वा सौवश्व्ये स्वश्वस्यापत्ये सूर्ये इति व्याख्येयम्। सूर्यः स्वश्वस्य तपसा तुष्टः सन् तस्य पुत्रोऽभूद् इत्ययम् अर्थः आख्यायिकामुखेनावगन्तव्यः। शिष्टं पूर्ववत्।

एवा ते हारियोजना सुवृक्तीन्द्र ब्रह्माणि गोतमासो अक्रन् ।
ऐषु[2] विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १६ ॥

एव । ते । हारिऽयोजन । सुऽवृक्ति। इन्द्र । ब्रह्माणि । गोतमासः । अक्रन् ।
आ । एषु । विश्वऽपेशसम् । धियम् । धाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥१६॥

---

1. सौवश्वे B,Cs, S. 2. एषु B,Cs.

मदेऽमदे । हि । नः । दुदिः । यूथा । गवाम् । ऋजुऽक्रतुः ।
सम् । गृभाय । पुरु । शता । उभयाहस्त्या । वसु । शिशीहि । रायः । आ । भर ॥ ४ ॥

**मादयस्व सुते सचा शवसे शूर राधसे ।**
**विद्मा हि त्वा पुरूवसुमुप कामान्त्ससृज्महेऽथा नोऽविता भव ॥ ५ ॥**

मादयस्व । सुते । सचा । शवसे । शूर । राधसे ।
विद्म । हि । त्वा । पुरुऽवसुम । उप । कामान् । ससृज्महे । अथ । नः । अविता । भव ॥ ५ ॥

**एते त इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम् ।**
**अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर ॥ ६ ॥**

एते । ते । इन्द्र । जन्तवः । विश्वम् । पुष्यन्ति । वार्यम् ।
अन्तः । हि । ख्यः । जनानाम् । अर्यः । वेदः । अदाशुषाम् । तेषाम् । नः । वेदः । आ । भर ॥ ६ ॥

**इति पञ्चमेऽनुवाके एकोनविंशं सूक्तम् ।**

**अतोर्याम्णि क्रतौ तृतीयसवने** 'सुरूपकृत्नुमूतये' ( अ २०,५७ ), 'शुष्मिन्तमं न ऊतये' ( अ २०,५७,४ ) **इति स्तोत्रियानुरूपौ भवतः । तत्र** 'सुरूपकृत्नुमूतये' **इति स्तोत्रियमभितः प्राकृतः स्तोत्रियो भवति ।** 'शुष्मिन्तमं न ऊतये' **इत्यनुरूपमभितः प्राकृतोऽनुरूपो भवति । तद् उक्तं वैताने**—"तृतीयसवने 'सुरूपकृत्नुमूतये', 'शुष्मिन्तमं न ऊतये' इति स्तोत्रियानुरूपावभितः स्तोत्रियानुरूपौ" ( वैताश्रौ २७,२५ ) **इति ।**

**तथा महाव्रते प्रातःसवने** 'सुरूपकृत्नुमूतये' **इत्याज्यस्तोत्रियो भवति । तद् उक्तं वैताने**—"महाव्रते 'सुरूपकृत्नुमूतये' इत्याज्यस्तोत्रियः" ( वैताश्रौ ३४,६ ) **इति ।**

**तथा श्येनसंदंशाजिरवज्रेषु एकाहेषु** 'सुरूपकृत्नुमूतये', 'उत्त्वा मन्दन्तु स्तोमाः' ( अ २०,९३ ) **एतौ आज्यस्तोत्रियौ विकल्पितौ भवतः ।** 'त्वामिद्धि हवामहे' ( अ २०, ९८ ) **इति पृष्ठस्तोत्रियो भवति । तद् उक्तं वैताने**—"श्येनसंदंशाजिरवज्रेषु 'सुरूपकृत्नुमूतये', 'उत्त्वा मन्दन्तु स्तोमाः', 'त्वामिद्धि हवामहे' इति" ( वैताश्रौ ३९,५ ) **इति ।**

**सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥ १ ॥**

सुरूपऽकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे । जुहूमसि । द्यविऽद्यवि ॥ १ ॥

**उप नः सवना गहि सोमस्य सोमपाः पिब । गोदा इद् रेवतो मदः ॥ २ ॥**

उप । नः । सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब । गोऽदाः । इत् । रेवतः । मदः ॥

अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अति ख्य आ गहि ।३।

अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् । मा । नः । अति । ख्यः । आ । गहि ॥ ३ ॥

शुष्मिन्तमं न ऊतये द्युम्निनं पाहि जागृविम् । इन्द्र सोमं शतक्रतो ॥४॥

शुष्मिन्ऽतमम् । नः । ऊतये । द्युम्निनम् । पाहि । जागृविम् । इन्द्र । सोमम् । शतक्रतो इति शतऽक्रतो ॥ ४ ॥

इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आ वृणे ॥५॥

इन्द्रियाणि । शतक्रतो इति शतऽक्रतो । या । ते । जनेषु । पञ्चऽसु । इन्द्र । तानि । ते । आ । वृणे ॥

अगन्निन्द्र श्रवो बृहद् द्युम्नं दधिष्व दुष्टरम् । उत् ते शुष्मं तिरामसि ॥६॥

अगन् । इन्द्र । श्रवः । बृहत् । द्युम्नम् । दधिष्व । दुस्तरम् । उत् । ते । शुष्मम् । तिरामसि ॥ ६ ॥

अर्वावतो न आ गह्यथो शक्र परावतः ।
उ लोको यस्ते अद्रिव इन्द्रेह तत आ गहि ॥ ७ ॥

अर्वाऽवतः । नः । आ । गहि । अथो इति । शक्र । पराऽवतः ।
ऊं इति । लोकः । यः । ते । अद्रिऽवः । इन्द्र । इह । ततः । आ । गहि ॥ ७ ॥

इन्द्रो अङ्ग महद् भयमभी षदप चुच्यवत् । स हि स्थिरो विचर्षणिः ॥८॥

इन्द्रः । अङ्ग । महत् । भयम् । अभि । सत् । अप । चुच्युवत् । सः । हि । स्थिरः । विऽचर्षणिः ॥

इन्द्रश्च मृलयाति[1] नो न नः पश्चादघं नशत् । भद्रं भवाति नः पुरः ॥९॥

इन्द्रः । च । मृल्याति । नः । न । नः । पश्चात् । अघम् । नशत् । भद्रम् । भवाति । नः । पुरः ॥९॥

इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून् विचर्षणिः ॥१०॥

इन्द्रः । आशाभ्यः । परि । सर्वाभ्यः । अभयम् । करत् । जेता । शत्रून् । विऽचर्षणिः ॥ १० ॥

क ईं वेद सुते सचा पिबन्तं कद् वयो दधे ।
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः ॥ ११ ॥

---

1. मृळयाति ऋ २,४१,११.

कः । ईम् । वेद । सुते । सचा । पिबन्तम् । कत् । वयः । दधे ।
अयम् । यः । पुरः । विऽभिनत्ति । ओजसा । मन्दानः । शिप्री । अन्धसः ॥ ११ ॥

**दाना मृगो न वारणः पुरुत्रा चरथं दधे ।**
**नकिष्ट्वा नि यमदा सुते गमो महांश्चरस्योजसा ॥ १२ ॥**

दाना । मृगः । न । वारणः । पुरुऽत्रा । चरथम् । दधे ।
नकिः । त्वा । नि । यमत् । आ । सुते । गमः । महान् । चरसि । ओजसा ॥ १२ ॥

**य उग्रः सन्ननिष्टृत स्थिरो रणाय संस्कृतः ।**
**यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥ १३ ॥**

यः । उग्रः । सन् । अनिःऽस्तृतः[1] । स्थिरः । रणाय । संस्कृतः ।
यदि । स्तोतुः । मघऽवा । शृणवत् । हवम् । न । इन्द्रः । योषति । आ । गमत् ॥१३॥

**वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।**
**पवित्रस्य प्रस्रवणेषु वृत्रहन् परि स्तोतार आसते ॥ १४ ॥**

वयम् । घ । त्वा । सुतऽवन्तः । आपः । न । वृक्तऽबर्हिषः ।
पवित्रस्य । प्रऽस्रवणेषु । वृत्रऽहन् । परि । स्तोतारः । आसते ॥ १४ ॥

**स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः ।**
**कदा सुतं तृषाण ओक आ गम इन्द्र स्वब्दीव वंसगः ॥ १५ ॥**

स्वरन्ति । त्वा । सुते । नरः । वसो इति । निरेके । उक्थिनः ।
कदा । सुतम् । तृषाणः । ओकः । आ । गमः । इन्द्र । स्वब्दीऽइव । वंसगः ॥ १५ ॥

**कण्वेभिर्धृष्णवा[2] धृषद् वाजं दर्षि सहस्रिणम् ।**
**पिशङ्गरूपं मघवन् विचर्षणे मक्षू गोमन्तमीमहे ॥ १६ ॥**

कण्वेभिः । धृष्णो इति । आ । धृषत् । वाजम् । दर्षि । सहस्रिणम् ।
पिशङ्गऽरूपम् । मघऽवन् । विऽचर्षणे । मक्षु । गोऽमन्तम् । ईमहे ॥ १६ ॥

**इति पञ्चमेऽनुवाके विंशं सूक्तम् ।**

---

१. अनिऽस्तृतः ऋ. पपा ८,३३,९.    २. °धृष्णुवा B.

**विषुवति सौर्यपृष्ठे** 'बण्महाँ असि सूर्य' ( अ २०,५८,३ ), 'श्रायन्त इव सूर्यम्' ( अ २०,५८,१ ) **इति विकल्पितौ पृष्ठस्तोत्रियानुरूपौ भवतः। तद् उक्तं वैताने**— "'बण्महाँ असि सूर्य', 'श्रायन्त इव सूर्यम्' इति वा" ( वैताश्रौ ३३,६ ) **इति।**

**तथा तीव्रसुच्चतुःपर्याययोः साहस्रान्त्ययोर्दशपेये विश्वंशयज्ञे** 'श्रायन्त इव सूर्यम्' **इत्येष पृष्ठस्तोत्रियो भवति।**

**तथा साद्यःक्राभिधानेषु एकाहेषु श्येनयागवर्जितेषु** 'अहमिद्धि पितुष्परि' ( अ २०,११५ ) **इत्याज्यस्तोत्रियो भवति। चकारात्** 'श्रायन्त इव सूर्यम्' **इत्याज्यस्तोत्रियो भवति। तद् उक्तं वैताने**—"तीव्रसुच्चतुःपर्याययोः साहस्रान्त्ययोर्दशपेये विश्वंशयज्ञे 'श्रायन्त इव सूर्यम्' इति। साद्यःक्रेषु श्येनवर्जम् 'अहमिद्धि पितुष्परि' इति च" ( वैताश्रौ ४०,५;६ ) **इति।**

**तथा साकमेधस्य तृतीयेऽहनि अस्य सूक्तस्य विनियोग उक्तः। स च** 'तमिन्द्रं वाजयामसि' ( अ २०,४७ ) **इति सूक्ते द्रष्टव्यः।**

**तथा चतुरहाणां तृतीयेष्वहःसु** 'श्रायन्त इव सूर्यम्' ( अ २०,५८ ), 'त्वं न इन्द्रा भर' ( अ २०,१०८ ) **एतौ पृष्ठोक्थस्तोत्रियौ भवतः। तद् उक्तं वैताने**— "चतुरहाणां 'श्रायन्त इव सूर्यम्', 'त्वं न इन्द्रा भर' इति" ( वैताश्रौ ४१,१० ) **इति।**

**तथा त्रिककुद्दशाहे अस्य विनियोगः** 'क ईं वेद सुते सचा' **इति सूक्ते** ( अ २०,५३ ) **उक्तः।**

**श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत।**
**वसूनि जाते[1] जनमान ओजसा[1] प्रति भागं न दीधिम॥ १॥**

श्रायन्तःऽइव। सूर्यम्। विश्वा। इत्। इन्द्रस्य। भक्षत।
वसूनि। जाते। जनमाने। ओजसा। प्रति। भागम्। न। दीधिम॥ १॥

**अनर्शरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः।**
**सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन्॥ २॥**

अनर्शऽरातिम्। वसुऽदाम्। उप। स्तुहि। भद्राः। इन्द्रस्य। रातयः।
सः। अस्य। कामम्। विधतः। न। रोषति। मनः। दानाय। चोदयन्॥ २॥

**बण्महाँ असि सूर्य बळादित्य महाँ असि।**
**महस्ते सतो महिमा 'पनस्यतेऽद्धा'[2] देव महाँ असि॥ ३॥**

---

१. जातो जनिमान्योज° कौ १,२६७ जै १,२८,५. २. पनिष्टम मह्ना कौ १,२७६ जै १,२९,४.

बट् । महान् । असि । सूर्य । बट् । आदित्य । महान् । असि ।
महः । ते । सतः । महिमा । पनस्यते । अद्धा । देव । महान् । असि ॥ ३ ॥

बट् सूर्य[1] श्रवसा महाँ असि सत्रा देव महाँ असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ ४ ॥

बट् । सूर्य । श्रवसा । महान् । असि । सत्रा । देव । महान् । असि ।
मह्ना । देवानाम् । असर्यः । पुरःऽहितः । विऽभु । ज्योतिः । अदाभ्यम् ॥ ४ ॥

**इति पञ्चमेऽनुवाके एकविंशं सूक्तम् ।**

**दशरात्रस्य दशमेऽहनि माध्यंदिने सवने** 'उदु त्ये मधुमत्तमाः' ( अ २०,५९,१ ), 'उदिन्न्वस्य रिच्यते' ( अ २०,५९,३ ) **इति पृष्ठस्तोत्रियानुरूपौ भवतः । तद् उक्तं वैताने**—"'उदु त्ये मधुमत्तमाः', 'उदिन्न्वस्य रिच्यते' इति पृष्ठस्तोत्रियानुरूपौ" ( वैताश्रौ ३३, २४ ) **इति ।**

'उदु त्ये[2] मधुमत्तमा गिर[3] स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ १ ॥

उत् । ऊं इति । त्ये । मधुमत्ऽतमाः । गिरः । स्तोमासः । ईरते ।
सत्राऽजितः । धनऽसाः । अक्षितऽऊतयः । वाजऽयन्तः । रथाःऽइव ॥ १ ॥

कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुः ।
इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् ॥ २ ॥

कण्वाःऽइव । भृगवः । सूर्याःऽइव । विश्वम् । इत् । धीतम् । आनशुः ।
इन्द्रम् । स्तोमेभिः । महयन्तः । आयवः । प्रियऽमेधासः । अस्वरन् ॥ २ ॥

उदिन्न्वस्य रिच्यतेंऽशो धनं न जिग्युषः ।
य इन्द्रो हरिवान्न दभन्ति तं रिपो दक्षं दधाति सोमिनि ॥ ३ ॥

उत् । इत् । नु । अस्य । रिच्यते । अंशः । धनम् । न । जिग्युषः ।
यः । इन्द्रः । हरिऽवान् । न । दभन्ति । तम् । रिपः । दक्षम् । दधाति । सोमिनि ॥३॥

---

१. सूर्यः B,B^h,Cs.　　२. उदुत्ते मै १,३,३९ माश्रौ २,५,४,३८,　　३. गिरः ऋ ८,३,१५ माश्रौ,

मन्त्रमखर्वं सुधितं सुपेशसं दधात यज्ञियेष्वा ।
पूर्वीश्चन प्रसितयस्तरन्ति तं य इन्द्रे कर्मणा भुवत् ॥ ४ ॥

मन्त्रम् । अखर्वम् । सुऽधितम् । सुऽपेशसम् । दधात । यज्ञियेषु । आ ।
पूर्वीः । चन । प्रऽसितयः । तरन्ति । तम् । यः । इन्द्रे । कर्मणा । भुवत् ॥ ४ ॥

इति पञ्चमेऽनुवाके द्वाविंशं सूक्तम् ।

अभिप्लवमध्यमेष्वहःसु द्वितीयतृतीयचतुर्थपञ्चमेषु 'एवा ह्यसि वीरयुः' इत्यादयोऽष्टौ तृचास्तृतीयसवने उक्थस्तोत्रियानुरूपा यथाक्रमं भवन्ति । एवं च 'एवा ह्यसि वीरयुः' ( अ २०,६० ), 'एवा ह्यस्य सूनृता' ( अ २०,६०,४-६ ) इति स्तोत्रियानुरूपौ द्वितीये । 'तं ते मदं गृणीमसि' ( अ २०,६१ ), 'तम्वभि प्र गायत' ( २०,६१,४-६ ) इति तृतीये । 'वयमु त्वामपूर्व्य' ( अ २०,६२,१ ), 'यो न इदमिदं पुरा' ( अ २०,६२,३ ) इति चतुर्थे । 'इन्द्राय साम गायत' ( अ २०,६२,५-७ ), 'तम्वभि प्र गायत' ( अ २०,६१,४-६ ) इति पञ्चमे । तद् उक्तं वैताने—"मध्यमेषु 'एवा ह्यसि वीरयुः' इत्युक्थस्तोत्रियानुरूपाः" ( वैताश्रौ ३१,२६ ) इति ।

तथा वैकृतस्य पृष्ठ्यत्र्यहस्य द्वितीयेऽहनि 'एवा ह्यसि वीरयुः' इति उक्थस्तोत्रियो भवति । तद् उक्तं वैताने—"पृष्ठ्यत्र्यहस्य 'एवा ह्यसि वीरयुः' इत्युक्थे" ( वैताश्रौ ४१,७ ) इति ।

तथा तस्यैव तृतीयेऽहनि अस्य विनियोगः 'अभि प्र वः सुराधसम्' ( अ २०,२१ ) इति सूक्ते उक्तः ।

तथा पृष्ठ्यपञ्चाहस्य द्वितीयेऽहनि 'एवा ह्यसि वीरयुः' इति पृष्ठोक्थस्तोत्रियो भवति । तद् उक्तं वैताने—"पृष्ठ्यपञ्चाहस्य 'एवा ह्यसि वीरयुः' इति" ( वैताश्रौ ४१,१६) इति ।

तथा पृष्ठ्यषडहस्य द्वितीयेऽहनि एष उक्थस्तोत्रियो भवति । तद् उक्तं वैताने—"पृष्ठ्यस्य द्वितीये 'एवा ह्यसि वीरयुः' इति" ( वैताश्रौ ४२,१ ) इति ।

एवा ह्यसि वीरयुरेवा शूर उत स्थिरः । एवा ते राध्यं मनः ॥ १ ॥

एव । हि । असि । वीरऽयुः । एव । शूरः । उत । स्थिरः । एव । ते । राध्यम् । मनः ॥ १ ॥

एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः । अधा चिदिन्द्र मे सचा ॥ २ ॥

एव । रातिः । तुविऽमघ । विश्वेभिः । धायि । धातृऽभिः । अध । चित् । इन्द्र । मे । सचा ॥२॥

मो षु ब्रह्मेव तन्द्रयुर्भुवो वाजानां पते । मत्स्वा सुतस्य गोमतः ॥ ३ ॥

मो इति । सु । ब्रह्माऽइव । तन्द्रयुः । भुवः । वाजानाम् । पते । मत्स्व । सुतस्य । गोऽमतः ॥

**एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा न दाशुषे ॥ ४ ॥**

एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही । पक्वा । शाखा । न । दाशुषे ॥ ४ ॥

**एवा हि ते विभूतय ऊतय इन्द्र मावते । सद्यश्चित् सन्ति दाशुषे ॥ ५ ॥**

एव । हि । ते । विऽभूतयः । ऊतयः । इन्द्र । माऽवते । सद्यः । चित् । सन्ति । दाशुषे ॥५॥

**एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या । इन्द्राय सोमपीतये ॥ ६ ॥**

एव । हि । अस्य । काम्या । स्तोमः । उक्थम् । च । शंस्या । इन्द्राय । सोमऽपीतये ॥ ६ ॥

**इति पञ्चमेऽनुवाके त्रयोविंशं सूक्तम् ।**

**अभिप्लवे** 'तं ते मदं गृणीमसि' **इत्यस्य विनियोगः पूर्वेण** (अ २०,६०) **सह उक्तः ।**

**तथा व्युष्ट्याङ्गिरसकापिवनचैत्ररथद्व्यहानां प्रथमेऽहनि** 'तं ते मदं गृणीमसि' **इति उक्थस्तोत्रियो भवति । तद् उक्तं वैताने**—"व्युष्ट्याङ्गिरसकापिवनचैत्ररथद्व्यहानां 'तं ते मदं गृणीमसि' इति" ( वैताश्रौ ४१,१ ) **इति ।**

**तथा वैश्वदेवादीनां त्र्यहाणां द्वितीयेष्वहःसु अस्य विनियोगः** 'तमिन्द्रं वाजयामसि' ( अ २०,४७ ) **इति सूक्ते उक्तः ।**

**तं ते मदं गृणीमसि वृषणं पृत्सु सासहिम् ।**
**उ लोककृत्नुमद्रिवो हरिश्रियम् ॥ १ ॥**

तम् । ते । मदम् । गृणीमसि । वृषणम् । पृत्ऽसु । ससहिम् ।
ऊं इति । लोकऽकृत्नुम् । अद्रिऽवः । हरिऽश्रियम् ॥ १ ॥

**येन ज्योतींष्यायवे मनवे च विवेदिथ । मन्दानो अस्य बर्हिषो वि राजसि ॥२॥**

येन । ज्योतींषि । आयवे । मनवे । च । विवेदिथ । मन्दानः । अस्य । बर्हिषः । वि । राजसि ॥

**तदद्या चित्त उक्थिनोऽनु ष्टुवन्ति पूर्वथा । वृषपत्नीरपो जया दिवेदिवे ॥ ३ ॥**

तत् । अद्य । चित् । ते । उक्थिनः । अनु । स्तुवन्ति । पूर्वऽथा । वृषऽपत्नीः । अपः ।
जय । दिवेऽदिवे ॥ ३ ॥

**तम्वभि प्र गायत पुरुहूतं पुरुष्टुतम् । इन्द्रं गीर्भिस्तविषमा विवासत ॥ ४ ॥**

तम् । ऊं इति । अभि । प्र । गायत । पुरुऽहूतम् । पुरुऽस्तुतम् । इन्द्रम् । गीःऽभिः । तविषम् । आ । विवासत ॥ ४ ॥

यस्य द्विबर्हसो बृहत् सहो दाधार रोदसी ।
गिरीँरज्राँ अपः स्वर्वृषत्वना ॥ ५ ॥

यस्य । द्विऽबर्हसः । बृहत् । सहः । दाधार । रोदसी इति ।
गिरीन् । अज्रान् । अपः । स्वः । वृषऽत्वना ॥ ५ ॥

स राजसि पुरुष्टुतँ एको वृत्राणि जिघ्नसे ।
इन्द्र जैत्रा श्रवस्या च यन्तवे ॥ ६ ॥

सः । राजसि । पुरुऽस्तुत । एकः । वृत्राणि । जिघ्नसे । इन्द्र । जैत्रा । श्रवस्या । च । यन्तवे ॥

**इति पञ्चमेऽनुवाके चतुर्विंशं सूक्तम् ।**

'वयमु त्वामपूर्व्य' इत्याद्यतृचस्य विनियोगः पूर्वत्र[3] ( अ २०,१४ ) उक्तः ।

तथा 'इन्द्राय साम गायत' ( अ २०,६२,५ ) इत्यस्य विनियोगः 'इन्द्रो मदाय वावृधे' ( अ २०,५६ ) इत्यनेन सह उक्तः ।

वयमु त्वामपूर्व्य स्थूरं न कच्चिद् भरन्तोऽवस्यवः । वाजे चित्रं हवामहे ॥ १ ॥

वयम् । ऊं इति । त्वाम् । अपूर्व्य । स्थूरम् । न । कत् । चित् । भरन्तः । अवस्यवः । वाजे । चित्रम् । हवामहे । ॥ १ ॥

उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् ।
त्वामिद्ध्यवितारं ववृमहे सखाय इन्द्र सानसिम् ॥ २ ॥

उप । त्वा । कर्मन् । ऊतये । सः । नः । युवा । उग्रः । चक्राम । यः । धृषत् ।
त्वाम् । इत् । हि । अवितारम् । ववृमहे । सखायः । इन्द्र । सानसिम् ॥ २ ॥

यो न इदमिदं पुरा प्र वस्य आनिनाय तमु व[4] स्तुषे । सखाय इन्द्रमूतये ॥ ३ ॥

यः । नः । इदम्ऽइदम् । पुरा । प्र । वस्यः । आऽनिनाय । तम् । ऊ इति । वः । स्तुषे । सखायः । इन्द्रम् । ऊतये ॥ ३ ॥

---

१. गिरीं° RW. २. °ष्टुत Cs. ३. इत्यत्र शंपा. ४. वः Bb;

पृ २०३७ टि २ द्र;

हर्यश्वं सत्पतिं चर्षणीसहं स हि ष्मा यो अमन्दत ।
आ तु नः स वयति गव्यमश्व्यं स्तोतृभ्यो मघवा शतम् ॥ ४ ॥

हरिऽअश्वम् । सत्ऽपतिम् । चर्षणिऽसहम् । सः । हि । स्म । यः । अमन्दत ।
आ । तु । नः । सः । वयति । गव्यम् । अश्व्यम् । स्तोतृऽभ्यः । मघऽवा । शतम् ॥४॥

इन्द्राय साम गायत विप्राय बृहते बृहत् । धर्मकृते विपश्चिते पनस्यवे ॥ ५ ॥

इन्द्राय । साम । गायत । विप्राय । बृहते । बृहत् । धर्मऽकृते । विपःऽचिते । पनस्यवे ॥

त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः । विश्वकर्मा विश्वदेवो महाँ असि ॥ ६ ॥

त्वम् । इन्द्र । अभिऽभूः । असि । त्वम् । सूर्यम् । अरोचयः । विश्वऽकर्मा । विश्वऽदेवः ।
महान् । असि ॥ ६ ॥

विभ्राजं ज्योतिषा स्व१रगच्छो रोचनं दिवः ।
देवास्त इन्द्र सख्याय येमिरे ॥ ७ ॥

विऽभ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनम् । दिवः ।
देवाः । ते । इन्द्र । सख्याय । येमिरे ॥ ७ ॥

तम्वभि प्र गायत पुरुहूतं पुरुष्टुतम् । इन्द्रं गीर्भिस्तविषमा विवासत ॥८॥

तम् । ऊं इति । अभि । प्र । गायत । पुरुऽहूतम् । पुरुऽस्तुतम् । इन्द्रम् । गीःऽभिः ।
तविषम् । आ । विवासत ॥ ८ ॥

यस्य द्विबर्हसो बृहत् सहो दाधार रोदसी । [1]गिरीँरज्राँ अपः स्वर्वृषत्वना ॥ ९ ॥

यस्य । द्विऽबर्हसः । बृहत् । सहः । दाधार । रोदसी इति । गिरीन् । अज्रान् । अपः ।
स्वः । वृषऽत्वना ॥ ९ ॥

स राजसि पुरुष्टुतँ एको वृत्राणि जिघ्नसे । इन्द्र जैत्रा श्रवस्या च यन्तवे ॥१०॥

सः । राजसि । पुरुऽस्तुत । एकः । वृत्राणि । जिघ्नसे । इन्द्र । जैत्रा । श्रवस्या । च । यन्तवे ॥

**इति पञ्चमेऽनुवाके पञ्चविंशं सूक्तम् ।**

**पृष्ठ्यस्य षष्ठेऽहनि** 'इमा नु कं भुवना सीषधाम' ( अ २०,६३,१ ), 'इन्द्राय देवा असुरान् यदायन्' ( अ २०,६३,२ ) **इति द्वैपदौ पच्छः शंसति । तद् उक्तं वैताने —**

---

1. गिरिं° RW.

"षष्ठे 'इमा नु कं भुवना सीषधाम', 'हत्वाय देवा असुरान् यदायन्' इति द्वैपदौ पच्छः" ( वैताश्रौ ३२,१२ ) इति।

वाजपेये तृतीयसवने प्राकृतयोः स्तोत्रियानुरूपयोः प्रत्याम्नायकौ 'य एक इद् विदयते' ( अ २०,६३,४ ), 'य इन्द्र सोमपातमः' ( अ २०,६३,७ ) एतौ उक्थस्तोत्रियानुरूपौ भवतः। तद् उक्तं वैताने—"तृतीयसवने 'य एक इद् विदयते', 'य इन्द्र सोमपातमः' इत्युक्थस्तोत्रियानुरूपौ" ( वैताश्रौ २७,१५ ) इति।

तथा अभिजिति विषुवति विश्वजिति महाव्रते च तृतीयसवने एतौ उक्थस्तोत्रियानुरूपौ भवतः। तद् उक्तं वैताने—"अभिजिति विषुवति विश्वजिति महाव्रते च 'य एक इद् विदयते', 'य इन्द्र सोमपातमः' इत्युक्थस्तोत्रियानुरूपौ" ( वैताश्रौ ३१,२० ) इति।

तथा विश्वजिति एकाहीभूते 'य एक इद् विदयते' इत्येष उक्थस्तोत्रियो भवति। तद् उक्तं वैताने—"विश्वजिति 'य एक इद् विदयते' इति" (वैताश्रौ ४०,१२) इति।

तथा चतुरहाणां चतुर्थेष्वहःसु 'महाँ इन्द्रो य ओजसा' ( अ २०,१३८ ), 'य एक इद् विदयते' ( अ २०,६३,४ ) एतौ आज्योक्थस्तोत्रियौ भवतः। तद् उक्तं वैताने—"चतुर्थेषु 'महाँ इन्द्रो य ओजसा', 'य एक इद् विदयते' इति" ( वैताश्रौ ४१,११ ) इति।

तथा अभिप्लवपञ्चाहस्य 'य एक इद् विदयते' इति उक्थस्तोत्रियो भवति। तद् उक्तं वैताने—"अभिप्लवपञ्चाहस्य 'य एक इद् विदयते' इति" (वैताश्रौ ४१,१८) इति।

तथा अभिप्लवस्य षष्ठमहः उक्थ्यसंस्थं भवति तदा 'य एक इद् विदयते' ( अ २५,६३,४ ), 'यत् सोममिन्द्र विष्णवि' ( अ २०,१११ ) एतौ उक्थस्तोत्रियौ विकल्पितौ भवतः। तद् उक्तं वैताने—"षष्ठमुक्थ्यं चेद् 'य एक इद् विदयते', 'यत् सोममिन्द्र विष्णवि' इति" (वैताश्रौ ४१,२२) इति।

तथा द्वादशाहस्य छन्दोमत्र्यहस्य प्रथमान्त्ययोरह्नोः 'त्वं न इन्द्रा भर' ( अ २०,१०८ ), 'य एक इद् विदयते' एतौ उक्थस्तोत्रियौ यथाक्रमं भवतः। तद् उक्तं वैताने—"द्वादशाहस्य छन्दोमप्रथमान्त्ययोः 'त्वं न इन्द्रा भर', 'य एक इद् विदयते' इति" (वैताश्रौ ४२,७) इति।

इमा नु कं भुवना सीषधामेन्द्रश्च[1] विश्वे च देवाः।
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह चीक्लृपाति[2] ॥ १ ॥

इमा। नु। कम्। भुवना। सीसधाम। इन्द्रः। च। विश्वे। च। देवाः।
यज्ञम्। च। नः। तन्वम्। च। प्रऽजाम्। च। आदित्यैः। इन्द्रः। सह। चीक्लृपाति॥

---

१. सीषधेमे[३,१] कौ २,४६०. २. सीषधाति मा २५,४६; सीषधातु[२] कौ २,४६१.

आदित्यैरिन्द्रः सगणो मरुद्भिरस्माकं भूत्ववितां तनूनाम् ।
हत्वाय देवा असुरान् यदायन् देवा देवत्वमभिरक्षमाणाः ॥ २ ॥

आदित्यैः । इन्द्रः । सऽगणः । मरुत्ऽभिः । अस्माकम् । भूत । अविता । तनूनाम् ।
हत्वाय । देवाः । असुरान् । यत् । आयन् । देवाः । देवऽत्वम् । अभिऽरक्षमाणाः ॥ २ ॥

'प्रत्यञ्चमर्कमनयं छचीभिरादित्' स्वधामिषिरां पर्यपश्यन् ।
अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ ३ ॥

प्रत्यञ्चम् । अर्कम् । अनयन् । शचीभिः । आत् । इत् । स्वधाम् । इषिराम् । परि । अपश्यन् ।
अया । वाजम् । देवऽहितम् । सनेम । मदेम । शतऽहिमाः । सुऽवीराः ॥ ३ ॥

य एक इद् विदयते वसु मर्ताय दाशुषे । ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ ४ ॥

यः । एकः । इत् । विऽदयते । वसु । मर्ताय । दाशुषे । ईशानः । अप्रतिऽस्कुतः ।
इन्द्रः । अङ्ग ॥ ४ ॥

कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् । कदा नः शुश्रवद् गिर इन्द्रो अङ्ग ।५।

कदा । मर्तम् । अराधसम् । पदा । क्षुम्पम्ऽइव । स्फुरत् । कदा । नः । शुश्रवत् ।
गिरः । इन्द्रः । अङ्ग ॥ ५ ।

यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति । उग्रं तत् पत्यते शव इन्द्रो अङ्ग ।६।

यः । चित् । हि । त्वा । बहुऽभ्यः । आ । सुतऽवान् । आऽविवासति । उग्रम् । तत् ।
पत्यते । शवः । इन्द्रः । अङ्ग ॥ ६ ॥

य इन्द्र सोमपातमो मदः शविष्ठ चेतति । येना हंसि न्य१त्त्रिणं तमीमहे[2] ॥ ७ ॥

यः । इन्द्र । सोमऽपातमः । मदः । शविष्ठ । चेतति । येन । हंसि । नि । अत्त्रिणम् । तम् । ईमहे ॥

येना दशग्वमध्रिगुं वेपयन्तं स्वर्णरम् । येना समुद्रमाविथा तमीमहे ॥ ८ ॥

येन । दशऽग्वम् । अध्रिऽगुम् । वेपयन्तम् । स्वःऽनरम् । येन । समुद्रम् । आविथ । तम् । ईमहे ॥

येन सिन्धुं महीरपो रथाँ इव प्रचोदयः । पन्थामृतस्य यातवे तमीमहे ॥९॥

---

१. °नयम्छची° ऋ १०,१५७,३ २. °त्रिणं RW. ऋ ८,१२,१

येन॑ । सिन्धु॑म् । म॒हीः । अ॒पः । रथा॑न्ऽइव । प्र॒ऽचो॒दयः॑ । पन्था॑म् । ऋ॒तस्य॑ । यात॑वे । तम् । ई॒म॒हे॒ ॥ ९ ॥

इति पञ्चमेऽनुवाके षड्विंशं सूक्तम् ।

अभिप्लवस्य पञ्चमेऽहनि 'एन्द्र नो गधि प्रियः' इति उक्थस्तोत्रियो भवति । तद् उक्तं वैताने — "पञ्चमे 'एन्द्र नो गधि प्रियः' इति" ( वैताश्रौ ४१,२१ ) इति ।

एन्द्र॑ नो गधि प्रि॒यः स॑त्रा॒जिद॑गो॒ह्यः । गि॒रिर्न वि॒श्वत॑स्पृ॒थुः[1] पति॑र्दि॒वः ॥ १ ॥

आ । इन्द्र॑ । नः॒ । ग॒धि॒ । प्रि॒यः । स॒त्रा॒ऽजित् । अगो॑ह्यः । गि॒रिः । न । वि॒श्वतः॑ । पृ॒थुः । पतिः॑ । दि॒वः ॥ १ ॥

अ॒भि हि स॑त्य सोमपा उ॒भे ब॒भूथ॒ रोद॑सी । इन्द्रासि॑ सुन्व॒तो वृ॒धः पति॑र्दि॒वः ॥ २ ॥

अ॒भि । हि । स॒त्य॒ । सो॒म॒ऽपाः॒ । उ॒भे इति॑ । ब॒भूथ॑ । रोद॑सी इति॑ । इन्द्र॑ । असि॑ । सु॒न्व॒तः । वृ॒धः । पतिः॑ । दि॒वः ॥ २ ॥

त्वं हि शश्व॑तीना॒मिन्द्र॑ द॒र्ता पु॒राम॑सि॑ । ह॒न्ता दस्यो॒र्मनो॑र्वृ॒धः पति॑र्दि॒वः ॥ ३ ॥

त्वम् । हि । शश्व॑तीनाम् । इन्द्र॑ । द॒र्ता । पु॒राम् । असि॑ । ह॒न्ता । दस्योः॑ । मनोः॑ । वृ॒धः । पतिः॑ । दि॒वः ॥ ३ ॥

एदु॒ मध्वो॑ म॒दिन्त॑रं सि॒ञ्च वा॑ध्वर्यो॒ अन्ध॑सः । ए॒वा हि वी॒र[2] स्तव॑ते स॒दावृ॑धः ॥ ४ ॥

आ । इत् । ऊं॒ इति॑ । मध्वः॑ । म॒दिन्ऽत॑रम् । सि॒ञ्च । वा॒ । अ॒ध्व॒र्यो॒ इति॑ । अन्ध॑सः । ए॒व । हि । वी॒रः । स्तव॑ते । स॒दाऽवृ॑धः ॥ ४ ॥

इन्द्र॑ स्थातर्हरी॒णां नकि॑ष्टे पू॒र्व्यस्तु॑तिम् । उदा॑नंश॒ शव॑सा न भ॒न्दना॑ ॥ ५ ॥

इन्द्र॑ । स्था॒त॒रिति॑ । ह॒री॒णाम् । नकिः॑ । ते॒ । पू॒र्व्यऽस्तु॑तिम् । उत् । आ॒नं॒श॒ । शव॑सा । न । भ॒न्दना॑ ॥ ५ ॥

तं वो॒ वाजा॑नां॒ पति॒मह्ू॑महि श्रव॒स्यवः॑ । अप्रा॑युभिर्य॒ज्ञेभि॑र्वावृ॒धेन्य॑म् ॥ ६ ॥

तम् । वः॒ । वाजा॑नाम् । पति॑म् । अहू॑महि । श्र॒व॒स्यवः॑ । अप्रा॑युऽभिः । य॒ज्ञेभिः॑ । व॒वृ॒धेन्य॑म् ॥

इति पञ्चमेऽनुवाके सप्तविंशं सूक्तम् ।

---

१. °तः पृथुः K; तः स्पृथुः C. २. वीरः ऋ ८,२४,१६.

**दशाहस्य नवमेऽहनि** 'एतो न्विन्द्रं स्तवाम' **इति उक्थस्तोत्रियो भवति। तद् उक्तं वैताने**— "नवमे 'एतो न्विन्द्रं स्तवाम' इति" (वैताश्रौ ४२,४) **इति।**

**एतो न्विन्द्रं स्तवाम सखायः[1] स्तोम्यं नरम्। कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ॥१॥**

एतो इति। नु। इन्द्रम्। स्तवाम। सखायः। स्तोम्यम्। नरम्। कृष्टीः। यः। विश्वाः। अभि। अस्ति। एकः। इत् ॥ १ ॥

**अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः। घृतात् स्वादीयो मधुनश्च वोचत ॥२॥**

अगोऽरुधाय। गोऽइषे। द्युक्षाय। दस्म्यम्। वचः। घृतात्। स्वादीयः। मधुनः। च। वोचत ॥ २ ॥

**यस्यामितानि वीर्या३[2] न राधः पर्येतवे। ज्योतिर्न[3] विश्वमभ्यस्ति दक्षिणा ॥३॥**

यस्य। अमितानि। वीर्या३। न। राधः। परिऽएतवे। ज्योतिः। न। विश्वम्। अभि। अस्ति। दक्षिणा ॥ ३ ॥

**इति पञ्चमेऽनुवाके अष्टाविंशं सूक्तम्।**

**स्तुहीन्द्रं व्यश्ववदनूर्मिं वाजिनं यमम्। अर्यो गयं मंहमानं वि दाशुषे ॥ १ ॥**

स्तुहि। इन्द्रम्। व्यश्वऽवत्। अनूर्मिम्[4]। वाजिनम्। यमम्। अर्यः। गयम्। मंहमानम्। वि। दाशुषे ॥ १ ॥

**एवा नूनमुप स्तुहि वैयश्व दशमं नवम्। सुविद्वांसं चर्कृत्यं चरणीनाम् ॥ २ ॥**

एव। नूनम्। उप। स्तुहि। वैयश्व। दशमम्। नवम्[5]। सुऽविद्वांसम्। चर्कृत्यम्। चरणीनाम् ॥

**वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम्। अहरहः शुन्ध्युः परिपदामिव ॥ ३ ॥**

वेत्थ। हि। निःऽऋतीनाम्। वज्रऽहस्त। परिऽवृजम्। अहःऽअहः। शुन्ध्युः। परिपदाम्ऽइव ॥

**इति पञ्चमेऽनुवाके एकोनत्रिंशं सूक्तम्।**

**इति पञ्चमोऽनुवाकः।**

**पृष्ठ्यषडहस्य षष्ठेऽहनि प्रातःसवनमाध्यंदिनयोर्द्वयोः सवनयोः प्राकृतीनां प्रस्थितयाज्यानां पुरस्तात्** 'वनोति हि' **इत्याद्याः पारुच्छेप्याख्या ऋचः संबध्नाति।**

---

१. सखायः ऋ ८,२४,१९. २. वीर्या१ K,Km. ३. ज्योतिर्हि K. ४. अनूर्मि P². ५. नमम् P.

तद् उक्तं वैताने -- "पृष्ठ्यषडहे 'वनोति हि सुन्वन् क्षयं परीणसः' ( अ २०,६७ ), 'विश्वे हि त्वा सवनेषु तुञ्जते' ( अ २०,७२ ) इति पाच्छेपीरादधाति द्वयोः सवनयोः पुरस्तात् प्रस्थितयाज्यानाम्" ( वैताश्रौ ३१,२७ ) इति ।

वनोति हि सुन्वन् क्षयं परीणसः[1] सुन्वानो हि ष्मा यजत्यव द्विषो देवानामव द्विषः। सुन्वान इत् सिषासति सहस्रा वाज्यवृतः[2] ।
सुन्वानायेन्द्रो ददात्याभुवं रयिं ददात्याभुवम् ॥ १ ॥

वनोति । हि । सुन्वन् । क्षयम् । परीणसः । सुन्वानः । हि । स्म । यजति । अव । द्विषः । देवानाम् । अव । द्विषः । सुन्वानः । इत् । सिसासति । सहस्रा । वाजी । अवृतः । सुन्वानाय । इन्द्रः । ददाति । आऽभुवम् । रयिम् । ददाति । आऽभुवम् ॥ १ ॥

मो षु वो अस्मदभि तानि पौंस्या सना भूवन्[3] द्युम्नानि मोत जारिषुरस्मत् पुरोत जारिषुः । यद् वश्चित्रं युगेयुगे नव्यं घोषादमर्त्यम् ।
अस्मासु तन्मरुतो यच्च दुष्टरं दिधृता यच्च दुष्टरम् ॥ २ ॥

मो इति । सु । वः । अस्मत् । अभि । तानि । पौंस्या । सना । भूवन्[4] । द्युम्नानि । मा । उत । जारिषुः । अस्मत् । पुरा । उत । जारिषुः । यत् । वः । चित्रम् । युगेऽयुगे । नव्यम् । घोषात् । अमर्त्यम् । अस्मासु । तत् । मरुतः । यत् । च । दुस्तरम् । दिधृत । यत् । च । दुस्तरम् ॥ २ ॥

अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् । य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु वष्टि शोचिषाजुह्वानस्य सर्पिषः ॥ ३ ॥

अग्निम् । होतारम् । मन्ये । दास्वन्तम् । वसुम् । सूनुम् । सहसः । जातऽवेदसम् । विप्रम् । न । जातऽवेदसम् । यः । ऊर्ध्वया । सुऽअध्वरः । देवः । देवाच्या । कृपा । घृतस्य । विऽभ्राष्टिम् । अनु । वष्टि । शोचिषा । आऽजुह्वानस्य । सर्पिषः ॥ ३ ॥

यज्ञैः संमिश्लाः पृषतीभिर्ऋष्टिभिर्यामं छुभ्रासो[5] अञ्जिषु प्रिया उत ।
आसद्या बर्हिर्भरतस्य सूनवः पोत्रादा सोमं पिबता दिवो नरः ॥ ४ ॥

---

१. परीणसः > परिणसः B. २. वाज्यावृतः RW. ३. भुवं B; भूवं $B^h$,D,E,R,$S^m$,Dc,Cs; भुवन् C. ४. भुवन् P,$P^2$,J. ५. 'यामंच्छु' ऋ २,३६,२.

यज्ञैः । सम्ऽमिश्लाः । पृषतीभिः । ऋष्टिऽभिः । यामन् । शुभ्रासः । अञ्जिषु । प्रियाः । उत ।
आऽसद्य । बर्हिः । भरतस्य । सूनवः । पोत्रात् । आ । सोमम् । पिबत । दिवः । नरः ॥४॥

**आ वक्षि देवाँ इह विप्र यक्षि चोशन् होतर्नि षदा योनिषु त्रिषु ।**
**प्रति वीहि प्रस्थितं सोम्यं मधु पिबाग्नीध्रात् तव भागस्य तृष्णुहि ॥५॥**

आ । वक्षि । देवान् । इह । विप्र । यक्षि । च । उशन् । होतः । नि । सद । योनिषु । त्रिषु ।
प्रति । वीहि । प्रऽस्थितम् । सोम्यम् । मधु । पिब । आग्नीध्रात् । तव । भागस्य । तृष्णुहि ॥

**एष स्य ते तन्वो नृम्णवर्धनः सह ओजः प्रदिवि बाह्वोर्हितः ।**
**तुभ्यं सुतो मघवन् तुभ्यमाभृतस्त्वमस्य ब्राह्मणादा तृपत् पिब ॥ ६ ॥**

एषः । स्यः । ते । तन्वः । नृम्णऽवर्धनः । सहः । ओजः । प्रऽदिवि । बाह्वोः । हितः ।
तुभ्यम् । सुतः । मघऽवन् । तुभ्यम् । आऽभृतः । त्वम् । अस्य । ब्राह्मणात् । आ । तृपत् । पिब ॥

**यमु पूर्वमहुवे तमिदं हुवे सेदु हव्यो ददिर्यो नाम पत्यते ।**
**अध्वर्युभिः प्रस्थितं सोम्यं मधु पोत्रात् सोमं द्रविणोदः पिब ऋतुभिः ॥७॥**

यम् । ऊं इति । पूर्वम् । अहुवे । तम् । इदम् । हुवे । सः । इत् । ऊं इति । हव्यः ।
ददिः । यः । नाम । पत्यते । अध्वर्युऽभिः । प्रऽस्थितम् । सोम्यम् । मधु । पोत्रात् ।
सोमम् । द्रविणःऽदः । पिब । ऋतुऽभिः ॥ ७ ॥

**इति षष्ठेऽनुवाके प्रथमं सूक्तम् ।**

**छन्दोमानां प्रथमेऽहनि प्रातःसवने** 'सुरूपकृत्नुमूतये' **इति द्वादश ऋच आवापस्थाने आवपते । तद् उक्तं वैताने —** " 'सुरूपकृत्नुमूतये' इति द्वादशर्चः" ( वैताश्रौ ३२,१५ ) **इति ।**

**सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥ १ ॥**

सुरूपऽकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे । जुहूमसि । द्यविऽद्यवि ॥ १ ॥

**उप[1] नः सवना गहि सोमस्य सोमपाः पिब । गोदा इद् रेवतो मदः ॥२॥**

उप । नः । सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब । गोऽदाः । इत् । रेवतः । मदः ॥

**अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अति ख्य आ गहि ॥ ३ ॥**

अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् । मा । नः । अति । ख्यः । आ । गहि ॥

1. उपः शंपा. सात.

परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् । यस्ते सखिभ्य आ वरम् ॥४॥
परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् । यः । ते । सखिऽभ्यः । आ । वरम् ॥ ४ ॥

उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत । दधाना इन्द्र इद् दुवः ॥ ५ ॥
उत । ब्रुवन्तु । नः । निदः । निः । अन्यतः । चित् । आरत । दधानाः । इन्द्रे । इत् । दुवः ॥

उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः । स्यामेदिन्द्रस्य शर्मणि ॥ ६ ॥
उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः । स्याम । इत् । इन्द्रस्य । शर्मणि ॥

एमाशुमाशवे भर यज्ञश्रियं नृमादनम् । पतयन्मन्दयत्सखम् ॥ ७ ॥
आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् । नृऽमादनम् । पतयत् । मन्दयत्ऽसखम् ॥

अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः । प्रावो वाजेषु वाजिनम् ॥८॥
अस्य । पीत्वा । शतक्रतो इति शतऽक्रतो । घनः । वृत्राणाम् । अभवः । प्र । आवः । वाजेषु । वाजिनम् ॥ ८ ॥

तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो । धनानामिन्द्र सातये ॥९॥
तम् । त्वा । वाजेषु । वाजिनम् । वाजयामः । शतक्रतो इति शतऽक्रतो । धनानाम् । इन्द्र । सातये ॥ ९ ॥

यो रायो३ऽवनिर्महान्त्सुपारः[1] सुन्वतः सखा । तस्मा इन्द्राय गायत ॥१०॥
यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा । तस्मै । इन्द्राय । गायत ॥

आ त्वेता नि षीदतेन्द्रमभि प्र गायत । सखाय[2] स्तोमवाहसः ॥११॥
आ । तु । आ । इत । नि । सीदत । इन्द्रम् । अभि । प्र । गायत । सखायः । स्तोमऽवाहसः ॥

पुरूतमं पुरूणामीशानं वार्याणाम् । इन्द्रं सोमे सचा सुते ॥ १२ ॥
पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् । इन्द्रम् । सोमे । सचा । सुते ॥ १२ ॥

इति षष्ठेऽनुवाके द्वितीयं सूक्तम् ।

---

१. °हान्त्सुपा° B,Dc. २. सखायः ऋ १,५,१.

छन्दोमानां द्वितीयेऽहनि 'स घा नो योग आ भुवत्' इति द्वात्रिंशतम् ऋच आवपते। तद् उक्तं वैताने — "'स घा न योग आ भुवत्' इति द्वात्रिंशतम्" (वैताश्रौ ३३,१५) इति।

**स घा नो योग आ भुवत् स राये स पुरंध्याम्। गमद् वाजेभिरा स नः॥ १॥**

सः। घ। नः। योगे। आ। भुवत्। सः। राये। सः। पुरम्ऽध्याम्। गमत्। वाजेभिः। आ। सः। नः॥ १॥

**यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः। तस्मा इन्द्राय गायत॥ २॥**

यस्य। सम्ऽस्थे। न। वृण्वते। हरी इति। समत्ऽसु। शत्रवः। तस्मै। इन्द्राय। गायत॥२॥

**सुतपाव्ने सुता इमे शुचयो यन्ति वीतये। सोमासो दध्याशिरः॥ ३॥**

सुतऽपाव्ने। सुताः। इमे। शुचयः। यन्ति। वीतये। सोमासः। दधिऽआशिरः॥ ३॥

**त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः। इन्द्र ज्यैष्ठ्याय सुक्रतो॥४॥**

त्वम्। सुतस्य। पीतये। सद्यः। वृद्धः। अजायथाः। इन्द्र। ज्यैष्ठ्याय। सुक्रतो इति सुऽक्रतो॥

**आ त्वा विशन्त्वाशवः सोमास इन्द्र गिर्वणः। शं ते सन्तु प्रचेतसे॥५॥**

आ। त्वा। विशन्तु। आशवः। सोमासः। इन्द्र। गिर्वणः। शम्। ते। सन्तु। प्रऽचेतसे॥

**त्वां स्तोमा अवीवृधन् त्वामुक्था शतक्रतो। त्वां वर्धन्तु नो गिरः॥ ६॥**

त्वाम्। स्तोमाः। अवीवृधन्। त्वाम्। उक्था। शतक्रतो इति शतऽक्रतो। त्वाम्। वर्धन्तु। नः। गिरः॥ ६॥

**अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणम्। यस्मिन् विश्वानि पौंस्या॥७॥**

अक्षितऽऊतिः। सनेत्। इमम्। वाजम्। इन्द्रः। सहस्रिणम्। यस्मिन्। विश्वानि। पौंस्या॥

**मा नो मर्ता अभि द्रुहन् तनूनामिन्द्र गिर्वणः। ईशानो यवया वधम्॥८॥**

मा। नः। मर्ताः। अभि। द्रुहन्। तनूनाम्। इन्द्र। गिर्वणः। ईशानः। यवय। वधम्॥

**युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः। रोचन्ते रोचना दिवि॥ ९॥**

युञ्जन्ति। ब्रध्नम्। अरुषम्। चरन्तम्। परि। तस्थुषः। रोचन्ते। रोचना। दिवि॥ ९॥

**युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे। शोणा धृष्णू नृवाहसा॥ १०॥**

युञ्जन्ति । अस्य । काम्या । हरी इति । विऽपक्षसा । रथे । शोणा । धृष्णू इति । नृऽवाहसा ॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ११ ॥

केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे । सम् । उषत्ऽभिः । अजायथाः ॥

आदह स्वधामनु पुनर्गर्भत्वमेरिरे । दधाना नाम यज्ञियम् ॥ १२ ॥

आत् । अह । स्वधाम् । अनु । पुनः । गर्भऽत्वम् । आऽईरिरे । दधानाः । नाम । यज्ञियम् ॥

इति षष्ठेऽनुवाके तृतीयं सूक्तम् ।

छन्दोमानां तृतीयेऽहनि 'वीळु चिदारुजत्नुभिः' इति षट्त्रिंशतम् ऋचः आवापस्थाने आवपते । तद् उक्तं वैताने — "'वीळु चिदारुजत्नुभिः' इति षट्त्रिंशतम् आवपते" (वैताश्रौ ३३,१५) इति ।

वीळु[1] चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः । अविन्द उस्रिया अनु ॥१॥

वीळु । चित् । आरुजत्नुऽभिः । गुहा । चित् । इन्द्र । वह्निऽभिः । अविन्दः । उस्रियाः । अनु ॥

देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः । महामनूषत श्रुतम् ॥ २ ॥

देवऽयन्तः । यथा । मतिम् । अच्छ । विदत्ऽवसुम् । गिरः । महाम् । अनूषत । श्रुतम् ॥ २ ॥

इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मन्दू[2] समानवर्चसा ॥ ३ ॥

इन्द्रेण । सम् । हि । दृक्षसे । सम्ऽजग्मानः । अबिभ्युषा । मन्दू इति । समानऽवर्चसा ॥ ३ ॥

अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ॥ ४ ॥

अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति । गणैः । इन्द्रस्य । काम्यैः ॥ ४ ॥

अतः परिज्मन्ना गहि दिवो वा रोचनादधि । समस्मिन्नृञ्जते गिरः ॥५॥

अतः । परिऽज्मन् । आ । गहि । दिवः । वा । रोचनात् । अधि । सम् । अस्मिन् । ऋञ्जते । गिरः ॥ ५ ॥

इतो वा सातिमीमहे दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः ॥६॥

इतः । वा । सातिम् । ईमहे । दिवः । वा । पार्थिवात् । अधि । इन्द्रम् । महः । वा । रजसः ॥

---

१. वीळु Bh,K,Km,V, ऋ १,६,५; वीड्ड C,R,Dc; विड्ड Cs. २. मण्डू B,Bh.

इन्द्रमिद् गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत ॥ ७ ॥

इन्द्रम्। इत्। गाथिनः। बृहत्। इन्द्रम्। अर्केभिः। अर्किणः। इन्द्रम्। वाणीः। अनूषत ॥

इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा। इन्द्रो वज्री हिरण्ययः ॥ ८ ॥

इन्द्रः। इत्। हर्योः। सचा। सम्ऽमिश्लः। आ। वचःऽयुजा। इन्द्रः। वज्री। हिरण्ययः ॥

इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद् दिवि। वि गोभिरद्रिमैरयत् ॥ ९ ॥

इन्द्रः। दीर्घाय। चक्षसे। आ। सूर्यम्। रोहयत्। दिवि। वि। गोभिः। अद्रिम्। ऐरयत् ॥

इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च। उग्र उग्राभिरूतिभिः ॥ १० ॥

इन्द्र। वाजेषु। नः। अव। सहस्रऽप्रधनेषु। च। उग्रः। उग्राभिः। ऊतिऽभिः ॥१०॥

इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे। युजं वृत्रेषु वज्रिणम् ॥ ११ ॥

इन्द्रम्। वयम्। महाऽधने। इन्द्रम्। अर्भे। हवामहे। युजम्। वृत्रेषु। वज्रिणम् ॥११॥

स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि। अस्मभ्यमप्रतिष्कुतः ॥ १२ ॥

सः। नः। वृषन्। अमुम्। चरुम्। सत्राऽदावन्। अप। वृधि। अस्मभ्यम्। अप्रतिऽस्कुतः ॥

तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः। न विन्धे अस्य सुष्टुतिम् ॥१३॥

तुञ्जेऽतुञ्जे। ये। उत्ऽतरे। स्तोमाः। इन्द्रस्य। वज्रिणः। न। विन्धे। अस्य। सुऽस्तुतिम् ॥

वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा। ईशानो अप्रतिष्कुतः ॥ १४ ॥

वृषा। यूथाऽइव। वंसगः। कृष्टीः। इयर्ति। ओजसा। ईशानः। अप्रतिऽस्कुतः ॥१४॥

य एकश्चर्षणीनां वसूनामिरज्यति। इन्द्रः पञ्च क्षितीनाम् ॥ १५ ॥

यः। एकः। चर्षणीनाम्। वसूनाम्। इरज्यति। इन्द्रः। पञ्च। क्षितीनाम् ॥ १५ ॥

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः ॥ १६ ॥

इन्द्रम्। वः। विश्वतः। परि। हवामहे। जनेभ्यः। अस्माकम्। अस्तु। केवलः ॥१६॥

एन्द्र सानसिं रयिं सजित्वानं सदासहम्। वर्षिष्ठमूतये भर ॥ १७ ॥

आ । इन्द्र । सानसिम् । रयिम् । सऽजित्वानम् । सदाऽसहम् । वर्षिष्ठम् । ऊतये । भर ॥१७॥

नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै । त्वोतासो न्यर्वता ॥ १८ ॥

नि । येन । मुष्टिऽहत्यया । नि । वृत्रा । रुणधामहै । त्वाऽऊतासः । नि । अर्वता ॥१८॥

इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि । जयेम सं युधि स्पृधः ॥१९॥

इन्द्र । त्वाऽऊतासः । आ । वयम् । वज्रम् । घना । ददीमहि । जयेम । सम् । युधि । स्पृधः ॥

वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम् । सासह्याम[1] पृतन्यतः ॥ २० ॥

वयम् । शूरेभिः । अस्तृऽभिः । इन्द्र । त्वया । युजा । वयम् । ससह्याम । पृतन्यतः ॥२०॥

इति षष्ठेऽनुवाके चतुर्थं सूक्तम् ।

'सं चोदय चित्रमर्वाक्' ( अ २०,७१,११ ) इत्यस्य विनियोगः 'प्रणेतारं वस्यो अच्छा' (अ २०,४६) इत्यनेन सह उक्तः ।

महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे । द्यौर्न प्रथिना शवः ॥ १ ॥

महान् । इन्द्रः । परः । च । नु । महिऽत्वम् । अस्तु । वज्रिणे । द्यौः । न । प्रथिना[2] । शवः ॥

समोहे वा य आशत नरस्तोकस्य सनितौ । विप्रासो वा धियायवः ॥ २ ॥

सम्ऽओहे । वा । ये । आशत । नरः । तोकस्य । सनितौ । विप्रासः । वा । धियाऽयवः ॥

यः कुक्षिः सोमपातमः समुद्र इव पिन्वते । उर्वीरापो न काकुदः ॥ ३ ॥

यः । कुक्षिः । सोमऽपातमः । समुद्रःऽइव । पिन्वते[3] । उर्वीः । आपः । न । काकुदः ॥३॥

एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा न दाशुषे ॥४॥

एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही । पक्वा । शाखा । न । दाशुषे ॥

एवा हि ते विभूतय ऊतय इन्द्र मावते । सद्यश्चित् सन्ति दाशुषे ॥५॥

---

१. सासु° B. २. पृथिना P. ३. पिन्वते P.

एव । हि । ते । विऽभूतयः । ऊतयः । इन्द्र । माऽवते । सद्यः । चित् । सन्ति । दाशुषे ॥

एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या । इन्द्राय सोमपीतये ॥ ६ ॥

एव । हि । अस्य । काम्या । स्तोमः । उक्थम् । च । शंस्या । इन्द्राय । सोमऽपीतये ॥६॥

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ अभिष्टिरोजसा ॥ ७ ॥

इन्द्र । आ । इहि । मत्सि । अन्धसः । विश्वेभिः । सोमपर्वऽभिः । महान् । अभिष्टिः । ओजसा ॥

एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने । चक्रिं विश्वानि चक्रये ॥ ८ ॥

आ । ईम् । एनम् । सृजत[1] । सुते । मन्दिम् । इन्द्राय । मन्दिने । चक्रिम् । विश्वानि । चक्रये ॥

मत्स्वा सुशिप्र मन्दिभि[2] स्तोमेभिर्विश्वचर्षणे । सचैषु सवनेष्वा ॥ ९ ॥

मत्स्व । सुऽशिप्र । मन्दिऽभिः । स्तोमेभिः । विश्वऽचर्षणे । सचा । एषु[3] । सवनेषु । आ ॥९॥

असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत । अजोषा वृषभं पतिम् ॥ १० ॥

असृग्रम् । इन्द्र । ते । गिरः । प्रति । त्वाम् । उत् । अहासत । अजोषाः । वृषभम् । पतिम् ॥१०॥

सं चोदय चित्रमर्वाग् राध इन्द्र वरेण्यम् । असदित् ते विभु प्रभु ॥११॥

सम् । चोदय । चित्रम् । अर्वाक् । राधः । इन्द्र । वरेण्यम् । असत् । इत् । ते । विऽभु । प्रऽभु ॥

अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः । तुविद्युम्न यशस्वतः ॥ १२ ॥

अस्मान् । सु । तत्र । चोदय । इन्द्र । राये । रभस्वतः । तुविऽद्युम्न । यशस्वतः[4] ॥ १२ ॥

सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत् । विश्वायुर्धेह्यक्षितम् ॥ १३ ॥

सम् । गोऽमत् । इन्द्र । वाजऽवत् । अस्मे इति । पृथु । श्रवः । बृहत् । विश्वऽआयुः । धेहि । अक्षितम् ॥ १३ ॥

अस्मे धेहि श्रवो बृहद् द्युम्नं सहस्रसातमम् । इन्द्र ता रथिनीरिषः ॥१४॥

अस्मे इति । धेहि । श्रवः । बृहत् । द्युम्नम् । सहस्रऽसातमम् । इन्द्र । ताः । रथिनीः । इषः ॥

---

१. सृजते P². २. मन्दिभिः Bh, C, K, Sm, Dc, ऋ १,९,२. ३. एषु P², ४. यशस्वः P,

वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्तं ऋग्मियम् । होम गन्तारमूतये ॥ १५ ॥

वसोः । इन्द्रम् । वसुऽपतिम् । गीःऽभिः । गृणन्तः । ऋग्मियम् । होम । गन्तारम् । ऊतये ॥१५॥

सुतेसुते न्योकसे बृहद् बृहत एदरिः । इन्द्राय शूषमर्चति ॥ १६ ॥

सुतेऽसुते । निऽओकसे । बृहत् । बृहते । आ । इत् । अरिः । इन्द्राय । शूषम् । अर्चति ॥१६॥

इति षष्ठेऽनुवाके पञ्चमं सूक्तम् ।

इति षष्ठोऽनुवाकः ।

पृष्ठ्यषडहस्य षष्ठेऽहनि 'विश्वेषु हि त्वा सवनेषु तुञ्जते' इत्यस्य विनियोगः 'वनोति हि सुन्वन् क्षयं परीणसः' ( अ २०,६७ ) इत्यनेन सह उक्तः ।

विश्वेषु हि त्वा सवनेषु तुञ्जते समानमेकं वृषमण्यवः पृथक् स्वः सनिष्यवः पृथक् ।[1]
तं त्वा नावं न पर्षणिं शूषस्य धुरि धीमहि ।
इन्द्रं न यज्ञैश्चितयन्त आयव[2] स्तोमेभिरिन्द्रमायवः ॥ १ ॥

विश्वेषु । हि । त्वा । सवनेषु । तुञ्जते । समानम् । एकम् । वृषऽमन्यवः । पृथक् । स्वः-१रिति स्वः । सनिष्यवः । पृथक् । तम् । त्वा । नावम् । न । पर्षणिम् । शूषस्य । धुरि । धीमहि । इन्द्रम् । न । यज्ञैः । चितयन्तः । आयवः । स्तोमेभिः । इन्द्रम् । आयवः ॥

वि त्वा ततस्रे मिथुना अवस्यवो व्रजस्य साता गव्यस्य निःसृजः
सक्षन्त इन्द्र निःसृजः । यद् गव्यन्ता द्वा जना स्व१र्यन्ता समूहसि ।
आविष्करिक्रद् वृषणं सचाभुवं वज्रमिन्द्र सचाभुवम् ॥ २ ॥

वि । त्वा । ततस्रे । मिथुनाः । अवस्यवः । व्रजस्य । साता । गव्यस्य । निःऽसृजः । सक्षन्तः । इन्द्र । निःऽसृजः । यत् । गव्यन्ता । द्वा । जना[3] । स्वः । यन्ता । सम्ऽऊहसि । आविः । करिक्रत् । वृषणम् । सचाऽभुवम् । वज्रम् । इन्द्र । सचाऽभुवम् ॥ २ ॥

उतो नो अस्या उषसो जुषेत ह्य१र्कस्य बोधि हविषो हवीमभिः स्वर्षाता हवीमभिः ।
यदिन्द्र हन्तवे मृधो वृषा "वज्रि चिकेतसि" ।
आ मे अस्य वेधसो नवीयसो मन्म श्रुधि नवीयसः ॥ ३ ॥

---

१. विरामाभावः B,Bʰ. २. आयवः ऋ १,१३१,२. ३. जनाः P². ४. वज्रिञ्चिके° ऋ १,१३१,६.

उतो इति । नः । अस्याः । उषसः । जुषेत । हि । अर्कस्य । बोधि । हविषः । हवीमऽभिः । स्वःऽसाता । हवीमऽभिः । यत् । इन्द्र । हन्तवे । मृधः । वृषा । वज्रिन् । चिकेतसि । आ । मे । अस्य । वेधसः । नवीयसः । मन्म । श्रुधि । नवीयसः ॥ ३ ॥

**इति सप्तमेऽनुवाके प्रथमं सूक्तम् ।**

**पृष्ठ्यस्य चतुर्थेऽहनि** 'तुभ्येदिमा सवना शूर विश्वा' **इति पुरस्तात्संपातसूक्तात् षडृच आवपते । तासां प्रथमास्तिस्र ऋचः अर्धर्चशः शंसति । तद् उक्तं वैताने**—"चतुर्थे 'तुभ्येदिमा सवना शूर विश्वा' इति षट् पुरस्तात्संपाताः । तिस्रोऽर्धर्चशः" ( वैताश्रौ ३२,७ ) **इति ।**

**तुभ्येदिमा सवना शूर विश्वा तुभ्यं ब्रह्माणि वर्धना कृणोमि ।**
**त्वं नृभिर्हव्यो विश्वधासि ॥ १ ॥**

तुभ्य । इत् । इमा । सवना । शूर । विश्वा । तुभ्यम् । ब्रह्माणि । वर्धना । कृणोमि ।
त्वम् । नृऽभिः । हव्यः । विश्वधा । असि ॥ १ ॥

**नू चिन्नु ते मन्यमानस्य दस्मोदश्नुवन्ति महिमानमुग्र ।**
**न वीर्यमिन्द्र ते न राधः ॥ २ ॥**

नु । चित् । नु । ते । मन्यमानस्य । दस्म । उत् । अश्नुवन्ति । महिमानम् । उग्र ।
न । वीर्यम् । इन्द्र । ते । न । राधः ॥ २ ॥

**प्र वो महे महिवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।**
**विशः पूर्वीः प्र चरा चर्षणिप्राः ॥ ३ ॥**

प्र । वः । महे । महिऽवृधे । भरध्वम् । प्रऽचेतसे । प्र । सुऽमतिम् । कृणुध्वम् ।
विशः । पूर्वीः । प्र । चर । चर्षणिऽप्राः ॥ ३ ॥

**यदा वज्रं हिरण्यमिदथा रथं हरी यमस्य वहतो वि सूरिभिः ।**
**आ तिष्ठति मघवा सनश्रुत[1] इन्द्रो वाजस्य दीर्घश्रवसस्पतिः ॥ ४ ॥**

यदा । वज्रम् । हिरण्यम् । इत् । अथ । रथम् । हरी इति । यम् । अस्य । वहतः । वि । सूरिऽभिः । आ । तिष्ठति । मघऽवा । सनऽश्रुतः[1] । इन्द्रः । वाजस्य । दीर्घऽश्रवसः । पतिः ॥

---

1. °श्रुत K,P.

सो चिन्नु वृष्टिर्यूथ्या३[1] स्वा सचाँ इन्द्रः श्मश्रूणि हरिताभि प्रुष्णुते ।
अव वेति सुक्षयं सुते मधूदिद् धूनोति वातो यथा वनम् ॥ ५ ॥

सो इति । चित् । नु । वृष्टिः । यूथ्या । स्वा । सचा । इन्द्रः । श्मश्रूणि[2] । हरिता । अभि । प्रुष्णुते[3] । अव । वेति । सुऽक्षयम् । सुते । मधु । उत् । इत् । धूनोति । वातः । यथा । वनम् ॥ ५ ॥

यो वाचा विवाचो मृध्रवाचः पुरू सहस्राऽशिवा जघान ।
तत्तादिदस्य पौंस्यं गृणीमसि पितेव यस्तविषीं वावृधे शवः ॥ ६ ॥

यः । वाचा । विऽवाचः । मृध्रऽवाचः । पुरु । सहस्रा । अशिवा । जघान । तत्ऽतत् । इत् । अस्य । पौंस्यम् । गृणीमसि । पिताऽइव । यः । तविषीम्[4] । वावृधे । शवः ॥६॥

इति सप्तमेऽनुवाके द्वितीयं सूक्तम् ।

पृष्ठ्यस्य पञ्चमेऽहनि पुरस्तात् संपातात् पङ्क्तिच्छन्दस्कम् 'यच्चिद्धि सत्य सोमपाः' इति सूक्तम् आवपते। तस्य शंसनधर्ममपि सूत्रकार आह । तद् उक्तं वैताने—"पञ्चमे 'यच्चिद्धि सत्य सोमपाः' इति पाङ्क्तं सतर्चम् । द्वौद्वाववसाय पञ्चमं सन्तनोति । त्रयं वावसाय द्वयम्" ( वैताश्रौ ३२,८ ) इति । अस्य अर्थः—पाङ्क्तस्य एकैकस्य द्वौ द्वौ पादौ संहतौ अवसाय अर्धर्चशस्यवत् पञ्चमं पादं प्रणवेनोपसंतनोति संबध्नाति। पादत्रयं संहतं वा अवसाय अन्त्यपादद्वयं संहतं प्रणवेनोपसंतनोति इति।

यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ १ ॥

यत् । चित् । हि । सत्य । सोमऽपाः । अनाशस्ताःऽइव । स्मसि ।
आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ १ ॥

शिप्रिन् वाजानां पते शचीवस्तव दंसना । आ तू० ॥ २ ॥

शिप्रिन् । वाजानाम् । पते । शचीऽवः । तव । दंसना । आ । तु । ० ॥ २ ॥

नि ष्वापया मिथूदृशा सस्तामबुध्यमाने । आ तू० ॥ ३ ॥

---

१. °थ्यां१ K. २. श्मश्रुणि P. ३. प्रुष्णुते P,P². ४. तुविषीम् P.

नि । स्त्रापय । मिथुऽदृशा । सस्ताम् । अबुध्यमाने इति । आ । तु । ० ॥ ३ ॥

**ससन्तु त्या अरातयो बोधन्तु शूर रातयः । आ तू० ॥ ४ ॥**

ससन्तु । त्याः । अरातयः । बोधन्तु । शूर । रातयः । आ । तु । ० ॥ ४ ॥

**समिन्द्र गर्दभं मृण नुवन्तं पापयाऽमुया । आ तू० ॥ ५ ॥**

सम् । इन्द्र । गर्दभम् । मृण । नुवन्तम्[1] । पापया । अमुया । आ । तु । ० ॥ ५ ॥

**पताति कुण्डृणाच्या दूरं वातो वनादधि । आ तू० ॥ ६ ॥**

पताति । कुण्डृणाच्या । दूरम् । वातः । वनात् । अधि । आ । तु । ० ॥ ६ ॥

**सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम् ।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ७ ॥**

सर्वम् । परिऽक्रोशम् । जहि । जम्भय । कृकदाश्वम् ।
आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ७ ॥

**इति सप्तमेऽनुवाके तृतीयं सूक्तम् ।**

**पृष्ठ्यस्य षष्ठेऽहनि पुरस्तात् संपातात्** 'वि त्वा ततस्रे मिथुना अवस्यवः' **इति तिस्रः सप्तपदा आवपते सूत्रोक्तप्रकारेण प्रणवेनोपसंतनोति च । तद् उक्तं वैताने—** "षष्ठे 'वि त्वा ततस्रे मिथुना अवस्यवः' [2]इति । सप्तपदानामेकैकमवसाय[2] द्वयं संतनोति । द्वयमवसाय द्वयम्" ( वैताश्रौ ३२,९ ) **इति । अस्य अर्थः— सप्तपदानां तिसृणामृचाम् एकैकस्यामृचि एकैकं पदम् अवसाय पदत्रयं प्रणवेनोपसंतनोति । ततः परं पादद्वयमवसाय अपरं पादद्वयं प्रणवेनोपसंतनोति ।**

**वि त्वा ततस्रे मिथुना अवस्यवो व्रजस्य साता गव्यस्य निःसृजः**
**सक्षन्त इन्द्र निःसृजः ।**
**यद् गव्यन्ता द्वा जना स्व१र्यन्ता समूहसि ।**
**आविष्करिक्रद् वृषणं सचाभुवं वज्रमिन्द्र सचाभुवम् ॥ १ ॥**

---

१. वुवन्तम् P². २. इति सप्त । पदा° RG.

वि । त्वा । ततस्रे । मिथुनाः । अवस्यवः । व्रजस्य । साता । गव्यस्य । निःऽसृजः । सक्षन्तः । इन्द्र । निःऽसृजः । यत् । गव्यन्तौ । द्वा । जनौ । स्वः । यन्तौ । सम्ऽऊहसि । आविः । करिक्रत् । वृषणम् । सचाऽभुवम् । वज्रम् । इन्द्र । सचाऽभुवम् ॥ १ ॥

**विदुष्टे अस्य वीर्यस्य पूरवः पुरो यदिन्द्र शारदीरवातिरः सासहानो अवातिरः ।**
**शासस्तमिन्द्र मर्त्यमयज्युं शवसस्पते ।**
**महीममुष्णाः पृथिवीमिमा अपो मन्दसान इमा अपः ॥ २ ॥**

विदुः । ते । अस्य । वीर्यस्य[1] । पूरवः । पुरः । यत् । इन्द्र । शारदीः । अवऽअतिरः । ससहानः । अवऽअतिरः । शासः । तम् । इन्द्र । मर्त्यम् । अयज्युम् । शवसः । पते । महीम् । अमुष्णाः । पृथिवीम् । इमाः । अपः । मन्दसानः । इमाः । अपः ॥ २ ॥

**आदित् ते अस्य वीर्यस्य चर्किरन्मदेषु वृषन्नुशिजो यदाविथ सखीयतो यदाविथ ।**
**चकर्थ कारमेभ्यः पृतनासु प्रवन्तवे ।**
**ते अन्यामन्यां नद्यं सनिष्णत श्रवस्यन्तः सनिष्णत ॥ ३ ॥**

आत् । इत् । ते । अस्य । वीर्यस्य । चर्किरन् । मदेषु । वृषन् । उशिजः । यत् । आविथ । सखिऽयतः । यत् । आविथ । चकर्थ । कारम् । एभ्यः । पृतनासु । प्रऽवन्तवे । ते । अन्याम्ऽअन्याम् । नद्यम् । सनिष्णत । श्रवस्यन्तः । सनिष्णत ॥ ३ ॥

**इति सप्तमेऽनुवाके चतुर्थं सूक्तम् ।**

**पृष्ठ्यस्य षष्ठेऽहन्येव पूर्वोक्तसप्तपदाभ्योऽनन्तरं पुरस्तात् संपातात्** 'वने न वा यो न्यधायि चाकन्' **इत्यष्टर्चम् आवपते । तद् उक्तं वैताने** — "'वने न वा यो न्यधायि चाकन्' इत्यष्टर्चं च" (वैताश्रौ ३२,१०) **इति ।**

**तथा छन्दोमानां द्वितीयतृतीययोरह्नोः माध्यंदिने सवने उपरिष्टात् संपातात् अष्टर्चम्** (अ २०,७६), 'आ सत्यो यातु मघवाँ ऋजीषी' (अ २०,७७) **इति सूक्तं चावपते । तद् उक्तं वैताने** — "उत्तरयोरष्टर्चम् 'आ सत्यो यातु मघवाँ ऋजीषी' इति चावपते" (वैताश्रौ ३३,१७) **इति ।** 'वने न वा यो न्यधायि चाकन्' **इत्यस्य अष्टर्चम् इति संज्ञा ।**

---

१. वीर्यस्य P.

वने न वा यो न्यधायि चाकं छुचिर्वां स्तोमो भुरणावजीगः ।
यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान् ॥ १ ॥

वने । न । वा । यः । नि । अधायि । चाकन् । शुचिः । वाम् । स्तोमः । भुरणौ । अजीगरिति । यस्य । इत् । इन्द्रः । पुरुऽदिनेषु । होता । नृणाम् । नर्यः । नृऽतमः । क्षपाऽवान् ॥ १ ॥

प्र ते अस्या उषसः प्रापरस्या नृतौ स्याम नृतमस्य नृणाम् ।
अनु त्रिशोकः शतमावहन्नृन् कुत्सेन रथो यो असत् ससवान् ॥ २ ॥

प्र । ते । अस्याः । उषसः । प्र । अपरस्याः । नृतौ । स्याम । नृऽतमस्य । नृणाम् । अनु । त्रिऽशोकः । शतम् । आ । अवहत् । नृन् । कुत्सेन । रथः । यः । असत् । ससऽवान् ॥ २ ॥

कस्ते मद इन्द्र रन्त्यो भूद् दुरो गिरो अभ्युग्रो वि धाव ।
कद् वाहो अर्वागुप मा मनीषा आ त्वा शक्यामुपमं राधो अन्नैः ॥ ३ ॥

कः । ते । मदः । इन्द्र । रन्त्यः । भूत् । दुरः । गिरः । अभि । उग्रः । वि । धाव । कत् । वाहः । अर्वाक् । उप । मा । मनीषा । आ । त्वा । शक्याम् । उपऽमम् । राधः । अन्नैः ॥

कदु द्युम्नमिन्द्र त्वावतो नृन् कया धिया करसे कन्न आगन् ।
मित्रो न सत्य उरुगाय भृत्या अन्ने समस्य यदसन्मनीषाः ॥ ४ ॥

कत् । ऊं इति । द्युम्नम् । इन्द्र । त्वाऽवतः । नृन् । कया । धिया । करसे । कत् । नः । आ । अगन् । मित्रः । न । सत्यः । उरुऽगाय । भृत्यै । अन्ने । समस्य । यत् । असन् । मनीषाः ॥

प्रेरय सूरो अर्थं न पारं ये अस्य कामं जनिधा इव ग्मन् ।
गिरश्च ये ते तुविजात पूर्वीर्नर इन्द्र प्रतिशिक्षन्त्यन्नैः ॥ ५ ॥

प्र । ईरय । सूरः । अर्थम् । न । पारम् । ये । अस्य । कामम् । जनिधाःऽइव । ग्मन् । गिरः । च । ये । ते । तुविऽजात । पूर्वीः । नरः । इन्द्र । प्रतिऽशिक्षन्ति । अन्नैः ॥ ५ ॥

मात्रे नु ते सुमिते इन्द्र पूर्वी द्यौर्मज्मना पृथिवी काव्येन ।
वराय ते घृतवन्तः सुतासः स्वाद्मन् भवन्तु पीतये मधूनि ॥ ६ ॥

मात्रे इति । नु । ते । सुमिते इति सुऽमिते । इन्द्र । पूर्वी इति । द्यौः । मज्मना । पृथिवी । काव्येन । वराय । ते । घृतऽवन्तः । सुतासः । स्वाद्मन् । भवन्तु । पीतये । मधूनि ॥ ६ ॥

आ मध्वो अस्मा असिचन्नमत्रमिन्द्राय पूर्णं स हि सत्यराधाः[1] ।
स वावृधे वरिमन्ना पृथिव्या अभि क्रत्वा नर्यः पौंस्यैश्च ॥ ७ ॥

आ । मध्वः । अस्मै । असिचन् । अमत्रम् । इन्द्राय । पूर्णम् । सः । हि । सत्यऽराधाः ।
सः । ववृधे । वरिमन् । आ । पृथिव्याः । अभि । क्रत्वा । नर्यः । पौंस्यैः । च ॥ ७ ॥

व्यानलिन्द्रः[2] पृतनाः स्वोजा आस्मै यतन्ते सख्याय पूर्वीः ।
आ स्मा रथं न पृतनासु तिष्ठ यं भद्रया सुमत्या चोदयासे ॥ ८ ॥

वि । आनट् । इन्द्रः । पृतनाः । सुऽओजाः । आ । अस्मै । यतन्ते । सख्याय । पूर्वीः ।
आ । स्म । रथम् । न । पृतनासु । तिष्ठ । यम् । भद्रया[3] । सुऽमत्या । चोदयासे ॥ ८ ॥

इति सप्तमेऽनुवाके पञ्चमं सूक्तम् ।

छन्दोमानां द्वितीयतृतीययोरह्नोः 'आ सत्यो यातु मघवाँ ऋजीषी' इत्यस्य विनियोगः पूर्वसूक्ते उक्तः ।

आ सत्यो यातु मघवाँ ऋजीषी द्रवन्त्वस्य हरय उप नः ।
तस्मा इदन्धः सुषुमा सुदक्षमिहाभिपित्वं करते गृणानः ॥ १ ॥

आ । सत्यः । यातु । मघऽवान् । ऋजीषी । द्रवन्तु । अस्य । हरयः । उप । नः ।
तस्मै । इत् । अन्धः । सुसुम । सुऽदक्षम् । इह । अभिऽपित्वम् । करते । गृणानः ॥ १ ॥

अव स्य शूराध्वनो नान्तेऽस्मिन् नो अद्य सवने मन्दध्यै ।
शंसात्युक्थमुशनेव वेधाश्चिकितुषे असुर्याय मन्म ॥ २ ॥

अव । स्य । शूर । अध्वनः । न । अन्ते[4] । अस्मिन् । नः । अद्य । सवने । मन्दध्यै ।
शंसाति । उक्थम् । उशनाऽइव । वेधाः । चिकितुषे । असुर्याय । मन्म ॥ २ ॥

कविर्न निण्यं विदथानि साधन् वृषा यत् सेकं विपिपानो अर्चात् ।
दिव इत्था जीजनत् सप्त कारूनह्ना चिच्चक्रुर्वयुना गृणन्तः ॥ ३ ॥

---

१. °राधः B. २. °नुळिन्द्रः K,K^m,V, ऋ १०,२९,८; °नळिन्द्रः B^b,C,R,S^m.
३. भद्राय P. ४. °न्ते > °न्ता P; अते P².

कविः । न । निण्यम् । विदथानि । साधन् । वृषा । यत् । सेकम् । विऽपिपानः । अर्चात् ।
दिवः । इत्था । जीजनत् । सप्त । कारून् । अह्ना । चित् । चक्रुः । वयुना । गृणन्तः ॥३॥

**स्व१र्यद् वेदि सुदृशीकमर्कैर्महि ज्योती रुरुचुर्यद्ध वस्तोः ।**
**अन्धा तमांसि दुधिता विचक्षे नृभ्यश्चकार नृतमो अभिष्टौ ॥ ४ ॥**

स्वः । यत् । वेदि । सुऽदृशीकम् । अर्कैः । महि । ज्योतिः । रुरुचुः । यत् । ह । वस्तोः ।
अन्धा । तमांसि । दुधिता । विऽचक्षे । नृऽभ्यः । चकार । नृऽतमः । अभिष्टौ ॥ ४ ॥

**ववक्ष इन्द्रो अमितमृजीष्यु१भे आ पप्रौ रोदसी महित्वा ।**
**अतश्चिदस्य महिमा वि रेच्यभि यो विश्वा भुवना बभूव ॥ ५ ॥**

ववक्षे । इन्द्रः । अमितम् । ऋजीषी । उभे इति । आ । पप्रौ । रोदसी इति । महिऽत्वा ।
अतः । चित् । अस्य । महिमा । वि । रेचि । अभि । यः । विश्वा । भुवना । बभूव ॥

**विश्वानि शक्रो नर्याणि विद्वानपो रिरेच सखिभिर्निकामैः ।**
**अश्मानं चिद् ये बिभिदुर्वचोभिर्व्रजं गोमन्तमुशिजो वि वव्रुः ॥६॥**

विश्वानि । शक्रः । नर्याणि । विद्वान् । अपः । रिरेच । सखिऽभिः । निऽकामैः ।
अश्मानम् । चित् । ये । बिभिदुः । वचःऽभिः । व्रजम् । गोऽमन्तम् । उशिजः । वि ।
वव्रुरिति वव्रुः ॥ ६ ॥

**अपो वृत्रं वव्रिवांसं पराहन् प्रावत् ते वज्रं पृथिवी सचेताः ।**
**प्रार्णांसि समुद्रियाण्यैनोः पतिर्भवं छवसा शूर धृष्णो ॥ ७ ॥**

अपः । वृत्रम् । वव्रिऽवांसम् । परा । अहन् । प्र । आवत् । ते । वज्रम् । पृथिवी । सऽचेताः ।
प्र । अर्णांसि । समुद्रियाणि । ऐनोः । पतिः । भवन् । शवसा । शूर । धृष्णो इति ॥ ७ ॥

**अपो यदद्रिं पुरुहूत दर्दराविर्भुवत् सरमा पूर्व्यं ते ।**
**स नो नेता वाजमा दर्षि भूरिं गोत्रा रुजन्नङ्गिरोभिर्गृणानः ॥ ८ ॥**

अपः । यत् । अद्रिम् । पुरुऽहूत । दर्दः । आविः । भुवत् । सरमा । पूर्व्यम् । ते । सः ।
नः । नेता । वाजम् । आ । दर्षि । भूरिम् । गोत्रा । रुजन् । अङ्गिरःऽभिः । गृणानः ॥

**इति सप्तमेऽनुवाके षष्ठं सूक्तम् ।**

वाजपेये 'तद् वो गाय' इति स्तोत्रियो भवति। तद् उक्तं वैताने—"'तद् वो गाय' इति स्तोत्रियः" (वैताश्री २७,१०) इति।

तथा बृहस्पतिसवे 'तद् वो गाय सुते सचा' (अ २०,७८), 'वयमेनमिदा ह्यः' (अ २०,९७) एतौ आज्यपृष्ठस्तोत्रियौ यथाक्रमं भवतः। तद् उक्तं वैताने—"बृहस्पतिसवे 'तद् वो गाय सुते सचा', 'वयमेनमिदा ह्यः' इति" (वैताश्री ३९,१) इति।

तथा तत्रैव प्रातःसवनमाध्यंदिनसवनयोः एतावेव उक्थमुखीयं तृचपर्यासश्च भवतः माध्यंदिने पर्यासादतृचवर्जम्। तद् उक्तं वैताने—'सवनयोरुक्थमुखीयतृचपर्यासौ। माध्यंदिने पर्यासादतृचवर्जम्' (वैताश्री ३९,३) इति।

तथा सर्वजित्यृषभे मरुत्स्तोमे साहस्रान्त्ये च चतुर्ष्वेकाहेषु 'तद् वो गाय सुते सचा', 'वयमेनमिदा ह्यः' एतौ आज्यपृष्ठस्तोत्रियौ भवतः। तद् उक्तं वैताने—"सर्वजित्यृषभे मरुत्स्तोमे साहस्रान्त्ये 'तद् वो गाय सुते सचा', 'वयमेनमिदा ह्यः' इति" (वैताश्री ३९,१८) इति।

तद् वो गाय सुते सचा पुरुहूताय सत्वने। शं यद् गवे न शाकिने ॥१॥
तत्। वः। गाय। सुते। सचा। पुरुऽहूताय। सत्वने। शम्। यत्। गवे। न। शाकिने ॥

न घा वसुर्नि यमते दानं वाजस्य गोमतः। यत् सीमुप श्रवद् गिरः ॥२॥
न। घ। वसुः। नि। यमते[1]। दानम्। वाजस्य। गोऽमतः। यत्। सीम्। उप। श्रवत्। गिरः ॥

कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत्। शचीभिरप नो[2] वरत् ॥ ३ ॥
कुवित्ऽसस्य। प्र। हि। व्रजम्। गोऽमन्तम्। दस्युऽहा। गमत्। शचीभिः। अप। नः। वरत् ॥

इति सप्तमेऽनुवाके सप्तमं सूक्तम्।

वाजपेये माध्यंदिने सवने 'इन्द्र क्रतुं न आ भर' (अ २०,७९), 'इन्द्र ज्येष्ठम्' (अ २०,८०), 'उदु त्ये मधुमत्तमाः' (अ २०,५९) इत्येतेषामन्यतमो विकल्पेन स्तोत्रियो भवति। तद् उक्तं वैताने—"माध्यंदिने 'इन्द्र क्रतुं न आ भर' इति स्तोत्रियः। 'इन्द्र ज्येष्ठम्', 'उदु त्ये मधुमत्तमाः' इति वा" (वैताश्री २७,१२) इति।

तथा विषुवति सौर्यपृष्ठे 'इन्द्र क्रतुं न आ भर', 'इन्द्र ज्येष्ठं न आ भर' इति विकल्पेन स्तोत्रियाऽनुरूपौ भवतः। तद् उक्तं वैताने—"'इन्द्र क्रतुं न आ भर', 'इन्द्र ज्येष्ठं न आ भर' इति वा" (वैताश्री ३३,९) इति।

---

1. युमते P, 2. वो RW.

**तथा विश्वजिति वैराजपृष्ठे** 'इन्द्र क्रतुं न आ भर' **इति इमां पूर्वाभ्यां तृतीयाम् अर्धर्चशःप्रग्रथनां शंसति। तद् उक्तं वैताने**— "'इन्द्र क्रतुं न आ भर' इति तृतीयाम्" ( वैताश्रौ ३३,१० ) **इति।**

**तथा इन्द्रस्तोमाख्ये एकाहे** 'इन्द्र क्रतुं न आ भर' ( अ २०,७९ ), 'तव त्यदिन्द्रियं बृहत्' ( अ २०,१०६ ) **इत्येतौ पृष्ठोक्थस्तोत्रियौ भवतः। तद् उक्तं वैताने**— "इन्द्रस्तोमे 'इन्द्र क्रतुं न आ भर', 'तव त्यदिन्द्रियं बृहत्' इति" ( वैताश्रौ ३९,१४ ) **इति।**

**तथा विषुवति एकाहीभूते** 'इन्द्र क्रतुं न आ भर' **इति पृष्ठस्तोत्रियो भवति। तद् उक्तं वैताने**— "विषुवति 'इन्द्र क्रतुं न आ भर' इति" ( वैताश्रौ ४०,१३ ) **इति।**

**इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा।**
**शिक्षा णो[1] अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ १ ॥**

इन्द्र। क्रतुम्। नः। आ। भर। पिता। पुत्रेभ्यः। यथा।
शिक्ष। नः। अस्मिन्। पुरुऽहूत। यामनि। जीवाः। ज्योतिः। अशीमहि ॥ १ ॥

**मा नो अज्ञाता वृजना दुराध्यो३ माऽशिवासो अव क्रमुः।**
**त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि[2] ॥ २ ॥**

मा। नः। अज्ञाताः। वृजनाः। दुःऽआध्यः। मा। अशिवासः। अव। क्रमुः।
त्वया। वयम्। प्रऽवतः। शश्वतीः। अपः। अति। शूर। तरामसि[2] ॥ २ ॥

**इति सप्तमेऽनुवाके अष्टमं सूक्तम्।**

**वाजपेये माध्यंदिने सवने** 'इन्द्र ज्येष्ठम्' **इत्यस्य पूर्वसूक्तेन सह उक्तो विनियोगः।**

**तथा विषुवति सौर्यपृष्ठे अस्य पूर्वसूक्तेन सह उक्तो विनियोगः।**

**इन्द्र ज्येष्ठं न आ भरँ[3] ओजिष्ठं पपुरि श्रवः।**
**येनेमे चित्र वज्रहस्त रोदसी ओभे[4] सुशिप्र प्राः ॥ १ ॥**

इन्द्र। ज्येष्ठम्। नः। आ। भर। ओजिष्ठम्। पपुरि। श्रवः।
येन। इमे इति। चित्र। वज्रऽहस्त। रोदसी इति। आ। उभे इति। सुऽशिप्र। प्राः ॥ १ ॥

---

१. नो तै ७,५,७,४.　　२. चरामसि Bh,K,R,Cs, P,P[2],J.　　३. भरँ B,D.　　४. उभे B.

त्वामुग्रमवसे चर्षणीसहं राजन् देवेषु हूमहे ।
विश्वा सु नो विथुरा पिब्दना वसोऽमित्रान् सुषहान् कृधि ॥ २ ॥

त्वाम् । उग्रम् । अवसे । चर्षणिऽसहम । राजन् । देवेषु । हूमहे ।
विश्वा । सु । नः । विथुरा । पिब्दना । वसो इति । अमित्रान् । सुऽसहान् । कृधि ॥ २ ॥

इति सप्तमेऽनुवाके नवमं सूक्तम् ॥

अप्तोर्यामिणि क्रतौ माध्यंदिने सवने 'यद् द्याव इन्द्र ते शतम्' (अ २०,८१) इति स्तोत्रियम् अभितः प्राकृतः स्तोत्रियो भवति । 'यदिन्द्र यावतस्त्वम्' (अ २०,८२) इत्यनुरूपम् अभितः प्राकृतोऽनुरूपः । तद् उक्तं वैताने—"माध्यंदिने 'यद् द्याव इन्द्र ते शतम्', 'यदिन्द्र यावतस्त्वम्' इति 'स्तोत्रियानुरूपावभितः स्तोत्रियानुरूपौ" (वैताश्रौ २७, २२) इति ।

तथा विश्वजिति वैराजपृष्ठे 'यद् द्याव इन्द्र ते शतम्', 'यदिन्द्र यावतस्त्वम्' इति पृष्ठस्तोत्रियानुरूपौ बार्हतौ प्रगाथौ भवतः । तद् उक्तं वैताने—"विश्वजिति वैराजपृष्ठे 'यद् द्याव इन्द्र ते शतम्', 'यदिन्द्र यावतस्त्वम्' इति पृष्ठस्तोत्रियानुरूपौ बार्हतौ" (वैताश्रौ ३३,९;१०) इति ।

तथा तनूपृष्ठे षडहे 'अभि त्वा शूर नोनुमः' (अ २०,१२१), 'त्वामिद्धि हवामहे' (अ २०,९८), 'यद् द्याव इन्द्र ते शतम्' (अ २०,८१), 'पिबा सोममिन्द्र मन्दतु त्वा' (अ २०,११७), 'कया नश्चित्र आ भुवत्' (अ २०,१२४), 'रेवतीर्नः सधमादे' (अ २०,१२२) इति पृष्ठस्तोत्रिया यथाक्रमं भवन्ति । तद् उक्तं वैताने—"तनूपृष्ठे 'अभि त्वा शूर नोनुमः', 'त्वामिद्धि हवामहे', 'यद् द्याव इन्द्र ते शतम्', 'पिबा सोममिन्द्र मन्दतु त्वा', 'कया नश्चित्र आ भुवत्', 'रेवतीर्नः सधमादे' इति" (वैताश्रौ ४२,९) इति ।

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रं[1] सूर्या अनु न जातमष्ट रोदसी ॥ १ ॥

यत् । द्यावः । इन्द्र । ते । शतम् । शतम् । भूमीः । उत । स्युरिति स्युः ।
न । त्वा । वज्रिन् । सहस्रम् । सूर्याः । अनु । न । जातम् । अष्ट । रोदसी इति ॥ १ ॥

आ पप्राथ महिना वृष्ण्या वृषन् विश्वा शविष्ठ शवसा ।
अस्माँ अव मघवन् गोमति व्रजे वज्रिं[2] चित्राभिरूतिभिः ॥ २ ॥

---

१. वज्रिं° B,Km; वज्रिन्° Bb,K,Dc,Cs, २. वज्रं B; वज्रिन् K.

आ । पप्राथ । महिना । वृष्ण्या । वृषन् । विश्वा । शविष्ठ । शवसा ।
अस्मान् । अव । मघऽवन् । गोऽमति । व्रजे । वज्रिन् । चित्राभिः । ऊतिऽभिः ॥ २ ॥

**इति सप्तमेऽनुवाके दशमं सूक्तम् ।**

**अप्तोर्यामिण क्रतौ** 'यदिन्द्र यावतस्त्वम्' **इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।**

**तथा विश्वजिति वैराजपृष्ठे अस्य सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।**

यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद् दिधिषेय रदावसो न पापत्वाय रासीय ॥ १ ॥

यत् । इन्द्र । यावतः । त्वम् । एतावत् । अहम् । ईशीय ।
स्तोतारम् । इत् । दिधिषेय । रदवसो इति रदऽवसो । न । पापऽत्वाय । रासीय ॥ १ ॥

शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे ।
नहि त्वदन्यन्मघवन् न आप्यं वस्यो अस्ति पिता चन ॥ २ ॥

शिक्षेयम् । इत् । महऽयते । दिवेऽदिवे । रायः । आ । कुहचित्ऽविदे ।
नहि । त्वत् । अन्यत् । मघऽवन् । नः । आप्यम् । वस्यः । अस्ति । पिता । चन ॥२॥

**इति सप्तमेऽनुवाके एकादशं सूक्तम् ।**

**अप्तोर्यामिण प्राकृतसामप्रगाथादनन्तरम्** 'इन्द्र त्रिधातु शरणम्' **इति सामप्रगाथो भवति । तद् उक्तं वैताने** — "सामप्रगाथाद् 'इन्द्र त्रिधातु शरणम्' इति सामप्रगाथः" ( वैताश्रौ २७,२२;२३ ) **इति ।**

**तथा विश्वजिति वैराजपृष्ठे** 'इन्द्र त्रिधातु शरणम्' **इति सामप्रगाथो भवति । तद् उक्तं वैताने** — " 'इन्द्र त्रिधातु शरणम्' इति सामप्रगाथः" ( वैताश्रौ **३३,११** ) **इति ।**

**इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।**
**छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ १ ॥**

इन्द्र । त्रिऽधातु । शरणम् । त्रिऽवरूथम् । स्वस्तिऽमत् ।
छर्दिः । यच्छ । मघवत्ऽभ्यः । च । मह्यम् । च । यवय । दिद्युम् । एभ्यः ॥ १ ॥

ये गव्यता मनसा शत्रुमादभुरभिप्रघ्नन्ति धृष्णुया ।
अध स्मा नो मघवन्निन्द्र गिर्वणस्तनूपा अन्तमो भव ॥ २ ॥

ये । गव्यता । मनसा । शत्रुम् । आऽदभुः । अभिऽप्रघ्नन्ति । धृष्णुऽया ।
अध । स्म । नः । मघऽवन् । इन्द्र । गिर्वणः । तनूऽपाः । अन्तमः । भव ॥ २ ॥

इति सप्तमेऽनुवाके द्वादशं सूक्तम् ।

चतुर्विंशे द्वितीयेऽहनि प्रातःसवने 'इन्द्रा याहि चित्रभानो' इति विकल्पेन आज्यस्तोत्रियो भवति । तद् उक्तं वैताने—" 'इन्द्रा याहि चित्रभानो' इति वा" ( वैताश्रौ ३१,१६ ) इति ।

तथा छन्दोमाख्येषु त्र्यहःसु प्रातःसवने अस्य 'तमिन्द्रं वाजयामसि' ( अ २०,४७) इत्यनेन सह विनियोग उक्तः ।

तथा चतुर्विंशे सांवत्सरिके एकाहीभूते 'इन्द्रा याहि चित्रभानो' ( २०,८४ ), 'मा चिदन्यद् वि शंसत' ( अ २०,८५ ) इत्याज्यपृष्ठस्तोत्रियौ भवतः । तद् उक्तं वैताने—"चतुर्विंशे 'इन्द्रा याहि चित्रभानो', 'मा चिदन्यद् वि शंसत' इति" ( वैताश्रौ ४०,११ ) इति ।

इन्द्रा याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासः ॥१॥

इन्द्र । आ । याहि । चित्रभानो इति चित्रऽभानो । सुताः । इमे । त्वाऽयवः । अण्वीभिः । तना । पूतासः ॥ १ ॥

इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ॥२॥

इन्द्र । आ । याहि । धिया । इषितः । विप्रऽजूतः । सुतऽवतः । उप । ब्रह्माणि । वाघतः ॥ २ ॥

इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥ ३ ॥

इन्द्र । आ । याहि । तूतुजानः । उप । ब्रह्माणि । हरिऽवः । सुते । दधिष्व । नः । चनः ॥

इति सप्तमेऽनुवाके त्रयोदशं सूक्तम् ।

चतुर्विंशे माध्यंदिने सवने 'मा चिदन्यद् वि शंसत' ( अ २०,८५,१;२ ), 'यच्चिद्धि त्वा जना इमे' ( अ २०,८५,३;४ ) इति विकल्पेन पृष्ठस्तोत्रियानुरूपौ बार्हतौ प्रगाथौ भवतः । तद् उक्तं वैताने—" 'मा चिदन्यद् वि शंसत', 'यच्चिद्धि त्वा जना इमे' इति वा" ( वैताश्रौ ३१,१८ ) इति ।

तथा चतुर्विंशे सांवत्सरिके एकाहीभूते 'मा चिदन्यद् वि शंसत' इत्यस्य विनियोगः पूर्वसूक्ते उक्तः ।

मा चिदन्यद् वि शंसत सखायो मा रिषण्यत ।
इन्द्रमित् स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥ १ ॥

मा । चित् । अन्यत् । वि । शंसत[1] । सखायः । मा । रिषण्यत ।
इन्द्रम् । इत् । स्तोत । वृषणम् । सचा । सुते । मुहुः । उक्था । च । शंसत ॥ १ ॥

अवक्रक्षिणं वृषभं यथाऽजुरं गां न चर्षणीसहम् ।
विद्वेषणं संवननोभयंकरं मंहिष्ठमुभयाविनम् ॥ २ ॥

अवऽक्रक्षिणम् । वृषभम् । यथा । अजुरम् । गाम् । न । चर्षणिऽसहम् ।
विऽद्वेषणम् । सम्ऽवनना । उभयम्ऽकरम् । मंहिष्ठम् । उभयाविनम्[2] ॥ २ ॥

यच्चिद्धि त्वा जना इमे नाना हवन्त ऊतये ।
अस्माकं ब्रह्मेदमिन्द्र भूतु तेऽहा विश्वा च वर्धनम् ॥ ३ ॥

यत् । चित् । हि । त्वा । जनाः । इमे । नाना । हवन्ते । ऊतये ।
अस्माकम् । ब्रह्म । इदम् । इन्द्र । भूतु । ते । अहा । विश्वा । च । वर्धनम् ॥ ३ ॥

वि तर्तूर्यन्ते मघवन् विपश्चितोऽर्यो विपो जनानाम् ।
उप क्रमस्व पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥ ४ ॥

वि । तर्तूर्यन्ते । मघऽवन् । विपःऽचितः । अर्यः । विपः । जनानाम् ।
उप । क्रमस्व । पुरुऽरूपम् । आ । भर । वाजम् । नेदिष्ठम् । ऊतये ॥ ४ ॥

**इति सप्तमेऽनुवाके चतुर्दशं सूक्तम् ।**

**संवत्सरे माध्यंदिने सवने सामप्रगाथाद् अनन्तरम्** 'ब्रह्मणा ते ब्रह्मयुजा युनज्मि' **इति आरम्भणीया भवति । तद् उक्तं वैताने**—"'ब्रह्मणा ते ब्रह्मयुजा युनज्मि' इत्यारम्भणीया" ( वैताश्रौ ३५,१३ ) इति ।

ब्रह्मणा ते ब्रह्मयुजा युनज्मि[3] हरी सखाया सधमाद आशू ।
स्थिरं रथं सुखमिन्द्राधितिष्ठन् प्रजानन् विद्वाँ उप याहि सोमम् ॥ १ ॥

---

१. शँसत P,P², Cp. २. °यामिनम् P. ३. युनच्मि B,Cs.

ब्रह्मणा । ते । ब्रह्मऽयुजा । युनज्मि । हरी इति । सखाया । सधऽमादे[1] । आशू इति ।
स्थिरम् । रथम् । सुऽखम् । इन्द्र । अधिऽतिष्ठन् । प्रऽजानन् । विद्वान् । उप । याहि । सोमम् ॥

**इति सप्तमेऽनुवाके पञ्चदशं सूक्तम् ।**

**द्वितीये छन्दोमेऽहनि** 'अध्वर्यवोऽरुणं दुग्धमंशुम्' ( अ २०,८७ ), 'यस्तस्तम्भ सहसा वि ज्मो अन्तान्' ( अ २०,८८ ), 'अस्तेव सु प्रतरं लायमस्यन्' ( अ २०,८९ ) **इत्यैकाहिकानि भवन्ति । तद् उक्तं वैताने** —"द्वितीये अध्वर्यवोऽरुणं दुग्धमंशुम्', 'यस्तस्तम्भ सहसा वि ज्मो अन्तान्', 'अस्तेव सु प्रतरं लायमस्यन्' इत्यैकाहिकानि" ( **वैताश्रौ ३३,१९ ) इति ।**

**तथा तृतीये छन्दोमेऽहनि** 'अध्वर्यवोऽरुणम्' ( अ २०,८७ ), 'यो अद्रिभित् प्रथमजा ऋतावा' ( अ २०,९० ), 'आ यात्विन्द्रः स्वपतिर्मदाय' ( अ २०,९४ ) **इत्येतानि ऐकाहिकानि भवन्ति । तद् उक्तं वैताने** — "'तृतीये अध्वर्यवोऽरुणम्', 'यो अद्रिभित् प्रथमजा ऋतावा', 'आ यात्विन्द्रः स्वपतिर्मदाय' इति" ( **वैताश्रौ ३३,२० ) इति ।**

**अध्वर्यवोऽरुणं दुग्धमंशुं जुहोतन वृषभाय क्षितीनाम् ।**
**गौराद् वेदीयाँ अवपानमिन्द्रो विश्वाहेद्याति सुतसोममिच्छन् ॥ १ ॥**

अध्वर्यवः । अरुणम् । दुग्धम् । अंशुम् । जुहोतन । वृषभाय । क्षितीनाम् ।
गौरात् । वेदीयान् । अवऽपानम् । इन्द्रः । विश्वाहा । इत् । याति । सुतऽसोमम् । इच्छन् ॥१॥

**यद् दधिषे प्रदिवि चार्वन्नं दिवेदिवे पीतिमिदस्य वक्षि ।**
**उत हृदोत मनसा जुषाण उशन्निन्द्र प्रस्थितान् पाहि सोमान् ॥ २ ॥**

यत् । दधिषे । प्रऽदिवि । चारु । अन्नम् । दिवेऽदिवे । पीतिम् । इत् । अस्य । वक्षि ।
उत । हृदा । उत । मनसा । जुषाणः । उशन् । इन्द्र । प्रऽस्थितान् । पाहि । सोमान् ॥२॥

**जज्ञानः सोमं सहसे पपाथ प्र ते माता महिमानमुवाच ।**
**एन्द्र पप्राथोर्वन्तरिक्षं युधा देवेभ्यो वरिवश्चकर्थ ॥ ३ ॥**

जज्ञानः । सोमम् । सहसे । पपाथ । प्र । ते । माता । महिमानम् । उवाच ।
आ । इन्द्र । पप्राथ । उरु । अन्तरिक्षम् । युधा । देवेभ्यः । वरिवः । चकर्थ ॥ ३ ॥

**यद् योधया महतो मन्यमानान् साक्षाम तान् बाहुभिः शाशदानान् ।**
**यद्वा नृभिर्वृत इन्द्राभियुध्यास्तं त्वयाजिं सौश्रवसं जयेम ॥ ४ ॥**

---

1. °मदे P.

यत् । योधयाः । महुतः । मन्यमानान् । साक्षाम । तान् । बाहुऽभिः । शाशदानान् ।
यत् । वा । नृऽभिः । वृतः । इन्द्र । अभिऽयुध्याः । तम् । त्वया । आजिम् । सौश्रवसम् । जयेम ॥

प्रेन्द्रस्य वोचं प्रथमा कृतानि प्र नूतना मघवा या चकार ।
यदेददेवीरसहिष्ट माया अथाभवत् केवलः सोमो अस्य ॥ ५ ॥

प्र । इन्द्रस्य । वोचम् । प्रथमा । कृतानि । प्र । नूतना । मघऽवा । या । चकार ।
यदा । इत् । अदेवीः । असहिष्ट । मायाः । अथ । अभवत् । केवलः । सोमः । अस्य ॥ ५ ॥

तवेदं विश्वमभितः पशव्यं[१] यत् पश्यसि चक्षसा सूर्यस्य ।
गवामसि गोपतिरेक इन्द्र भक्षीमहि ते प्रयतस्य वस्वः ॥ ६ ॥

तव । इदम् । विश्वम् । अभितः । पशव्यम् । यत् । पश्यसि । चक्षसा । सूर्यस्य ।
गवाम् । असि । गोऽपतिः । एकः । इन्द्र । भक्षीमहि । ते । प्रऽयतस्य । वस्वः ॥ ६ ॥

बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद् यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

बृहस्पते । युवम् । इन्द्रः । च । वस्वः । दिव्यस्य । ईशाथे इति । उत । पार्थिवस्य ।
धत्तम् । रयिम् । स्तुवते । कीरये । चित् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

**इति सप्तमेऽनुवाके षोडशं सूक्तम् ।**

**द्वितीये छन्दोमेऽहनि** 'यस्तस्तम्भ सहसा वि ज्मो अन्तान्' **इत्यस्य विनियोगः पूर्वसूक्तेन सह उक्तः ।**

यस्तस्तम्भ सहसा वि ज्मो[१] अन्तान् बृहस्पतिस्त्रिषधस्थो रवेण ।
तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम् ॥ १ ॥

यः । तस्तम्भ । सहसा । वि । ज्मः । अन्तान् । बृहस्पतिः । त्रिऽसधस्थः । रवेण ।
तम् । प्रत्नासः । ऋषयः । दीध्यानाः । पुरः । विप्राः । दधिरे । मन्द्रऽजिह्वम् ॥ १ ॥

धुनेतयः सुप्रकेतं[२] मदन्तो बृहस्पते अभि ये नस्ततस्रे ।
पृषन्तं सृप्रमदब्धमूर्वं[३] बृहस्पते रक्षतादस्य योनिम् ॥ २ ॥

---

१. ग्मो B. २. सुप्रकुतं B. ३. °मूर्मि K, Km.

धुनऽईतयः । सुऽप्रकेतम् । मदन्तः । बृहस्पते । अभि । ये । नः । ततस्रे ।
पृषन्तम् । सृप्रम् । अदब्धम् । ऊर्वम् । बृहस्पते । रक्षतात् । अस्य । योनिम् ॥ २ ॥

बृहस्पते या परमा परावदत आ त ऋतस्पृशो नि षेदुः ।
तुभ्यं खाता अवता अद्रिदुग्धा मध्वः[1] श्चोतन्त्यभितो विरप्शम् ॥ ३ ॥

बृहस्पते[2] । या । परमा । पराऽवत् । अतः । आ । ते । ऋतऽस्पृशः । नि । सेदुः ।
तुभ्यम् । खाताः । अवताः । अद्रिऽदुग्धाः । मध्वः । श्चोतन्ति । अभितः । विऽरप्शम्[3] ॥३॥

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।
सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत् तमांसि ॥ ४ ॥

बृहस्पतिः । प्रथमम् । जायमानः । महः । ज्योतिषः । परमे । विऽओमन् ।
सप्तऽआस्यः । तुविऽजातः । रवेण । वि । सप्तऽरश्मिः । अधमत् । तमांसि ॥ ४ ॥

स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद् वावशतीरुदाजत् ॥ ५ ॥

सः । सुऽस्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज । फलिऽगम् । रवेण ।
बृहस्पतिः । उस्रियाः । हव्यऽसूदः । कनिक्रदत् । वावशतीः । उत् । आजत् ॥ ५ ॥

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥ ६ ॥

एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमसा[4] । हविःऽभिः ।
बृहस्पते । सुऽप्रजाः । वीरऽवन्तः । वयम् । स्याम । पतयः । रयीणाम् ॥ ६ ॥

इति सप्तमेऽनुवाके सप्तदशं सूक्तम् ।

द्वितीये छन्दोमेऽहनि 'अस्तेव सु प्रतरं लायमस्यन्' इत्यस्य विनियोगः 'अध्वर्यवोऽरुणं दुग्धमंशुम्' ( अ २०,८७ ) इत्यनेन सह उक्तः ।

अस्तेव सु प्रतरं लायमस्यन् भूषन्निव प्र भरा स्तोममस्मै ।
वाचा विप्रास्तरत वाचमर्यो नि रामय जरितः सोम इन्द्रम् ॥ १ ॥

---

१. मध्वः E. ऋ ४,५०,३. २. बृहस्पते P,P². ३. °रप्शम् P,P²,J. ४. नमसा P.

अस्ताऽइव । सु । प्रऽतरम् । लायम् । अस्यन् । भूषन्ऽइव । प्र । भर । स्तोमम् । अस्मै । वाचा । विप्राः । तरत । वाचम् । अर्यः । नि । रमय । जरितरिति । सोमे । इन्द्रम् ॥ १ ॥

**दोहेन गामुप शिक्षा सखायं प्र बोधय जरितर्जारमिन्द्रम् ।**
**कोशं[1] न पूर्णं वसुना न्यृष्टमा च्यावय मघदेयाय शूरम् ॥ २ ॥**

दोहेन । गाम् । उप । शिक्ष । सखायम् । प्र । बोधय । जरितः । जारम् । इन्द्रम् । कोशम् । न । पूर्णम् । वसुना । निऽऋष्टम् । आ । च्यवय । मघऽदेयाय । शूरम् ॥ २ ॥

**किमङ्ग त्वा मघवन् भोजमाहुः शिशीहि 'मा शिशयं[2] त्वा शृणोमि ।**
**अप्नस्वती मम धीरस्तु शक्र वसुविदं भगमिन्द्रा भरा नः ॥ ३ ॥**

किम् । अङ्ग । त्वा । मघऽवन् । भोजम् । आहुः । शिशीहि । मा । शिशयम् । त्वा । शृणोमि । अप्नस्वती । मम । धीः । अस्तु । शक्र । वसुऽविदम् । भगम् । इन्द्र । आ । भर । नः ॥ ३ ॥

**त्वां जना ममसत्येष्विन्द्र संतस्थाना वि ह्वयन्ते समीके ।**
**अत्रा युजं कृणुते यो हविष्मान्नासुन्वता सख्यं वष्टि शूरः ॥ ४ ॥**

त्वाम् । जनाः । ममऽसत्येषु । इन्द्र । सम्ऽतस्थानाः । वि । ह्वयन्ते । सम्ऽईके । अत्र । युजम् । कृणुते । यः । हविष्मान् । न । असुन्वता । सख्यम् । वष्टि । शूरः ॥ ४ ॥

**धनं न स्पन्द्रं[3] बहुलं यो अस्मै तीव्रान्त्सोमाँ आसुनोति प्रयस्वान्[4] ।**
**तस्मै शत्रून्त्सुतुकान् प्रातरह्नो नि स्वष्ट्रान् युवति हन्ति वृत्रम् ॥ ५ ॥**

धनम् । न । स्पन्द्रम् । बहुलम् । यः । अस्मै । तीव्रान् । सोमान् । आऽसुनोति । प्रयस्वान् । तस्मै । शत्रून् । सुऽतुकान् । प्रातः । अह्नः । नि । सुऽअष्ट्रान् । युवति । हन्ति । वृत्रम् ॥ ५ ॥

**यस्मिन् वयं दधिमा शंसमिन्द्रे यः शिश्राय मघवा काममस्मे ।**
**आराच्चित् सन् भयतामस्य शत्रुर्न्यस्मै[5] द्युम्ना जन्या नमन्ताम् ॥ ६ ॥**

यस्मिन् । वयम् । दधिम । शंसम्[6] । इन्द्रे । यः । शिश्राय । मघऽवा । कामम् । अस्मे इति । आरात् । चित् । सन् । भयताम् । अस्य । शत्रुः । नि । अस्मै । द्युम्ना । जन्या । नमन्ताम् ॥ ६ ॥

---

१. कशं B,Bʰ,K,Kᵐ. २. मा शिशयं RW. ३. स्यन्द्रं RW, PW, GW. ४. पयं B. ५. शत्रुर्म्यस्मै Bʰ,K,Kᵐ,Dc,Cs. ६. शंसम् P,P².

आराच्छत्रुमप बाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन ।
अस्मे धेहि यवमद् गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम् ॥ ७ ॥

आरात् । शत्रुम् । अप । बाधस्व । दूरम् । उग्रः । यः । शम्बः । पुरुऽहूत । तेन ।
अस्मे इति । धेहि । यवऽमत् । गोऽमत् । इन्द्र । कृधि । धियम् । जरित्रे । वाजऽरत्नाम् ॥७॥

प्र यमन्तर्वृषसवासो अग्मन्[1] तीव्राः सोमा बहुलान्तास इन्द्रम् ।
नाह दामानं मघवा नि यंसन् नि सुन्वते वहति भूरि वामम् ॥ ८ ॥

प्र । यम्[2] । अन्तः । वृषऽसवासः । अग्मन् । तीव्राः । सोमाः । बहुलऽअन्तासः । इन्द्रम् ।
न । अह । दामानम् । मघऽवा । नि । यंसत् । नि । सुन्वते । वहति । भूरि । वामम् ॥

[3]उत प्रहामतिदीवा जयति कृतमिव श्वघ्नी वि चिनोति काले ।
यो देवकामो न धनं रुणद्धि समित् तं रायः सृजति स्वधाभिः ॥ ९ ॥

उत । प्रऽहाम् । अतिऽदीवा । जयति । कृतम्ऽइव । श्वऽघ्नी । वि । चिनोति । काले ।
यः । देवऽकामः । न । धनम् । रुणद्धि । सम् । इत् । तम् । रायः । सृजति । स्वधाभिः ॥

गोभिष्टरेमामतिं दुरेवां यवेन वा क्षुधं पुरुहूत विश्वे † ।
वयं राजसु ‡ प्रथमा धनान्यरिष्टासो * वृजनीभिर्जयेम $ ॥ १० ॥[3]

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । वा । क्षुधम् । पुरुऽहूत । विश्वे ।
वयम् । राजऽसु । प्रथमाः । धनानि । अरिष्टासः । वृजनीभिः । जयेम ॥ १० ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरीयः[4] कृणोतु ॥ ११ ॥

---

१. अग्नं° B. २. वृषम् P. ३. अन्यहस्तलेखवत् S^m. अपि मन्त्रावेतौ पूर्वं (अ ७,५२,६;७) गताविति कृत्स्नैनयोः प्रतीकमात्रं ददाति । पश्चात्स पुनरेतन्मन्त्रद्वयम् ऋ. (१०,४२,९;१०) RW. संवादि पठति–

उत प्रहामति दीव्या जयति (जयाति RW. ऋ.) कृतं यच्छ्वघ्नी विचिनोति काले ।
यो देवकामो न धना रुणद्धि समित्तं राया सृजति स्वधावान् ॥
गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥ १० ॥

† विश्वाम् पै १७,२५,६. ‡ राजानः पै. * धनानामरि° पै. $ °भिस्तरेम पै.
४. वरिवः RW. ऋ १०,४२,११.

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः । इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरीयः । कृणोतु ॥ ११ ॥

इति सप्तमेऽनुवाके अष्टादशं सूक्तम् ।

**तृतीये छन्दोमेऽहनि** 'यो अद्रिभित्' **इत्यस्य विनियोगः** 'अध्वर्यवोऽरुणम्' ( अ २०,८७ ) **इत्यनेन सह उक्तः ।**

**तथा उभयोर्द्वितीयतृतीययोरह्नोरैकाहिकानां सूक्तानां मध्यमस्य आदावन्ते वा** 'यो अद्रिभित्' ( अ २०,९० ), 'इमां धियं सप्तशीर्ष्णीं पिता नः' ( अ २०,९१ ) **इत्येतयोर्यथाक्रमम् एकैकं शंसति । तद् उक्तं वैताने**— " 'यो अद्रिभित्', 'इमां धियं सप्तशीर्ष्णीं पिता नः' इत्युभयोरेकैकं मध्यमस्यादावन्त्ये वा" ( वैताश्रौ ३३,२१ ) **इति ।**

**यो अद्रिभित् प्रथमजा ऋतावा बृहस्पतिराङ्गिरसो हविष्मान् ।**
**द्विबर्हज्मा प्राघर्मसत् पिता न आ रोदसी वृषभो रोरवीति ॥ १ ॥**

यः । अद्रिऽभित् । प्रथमऽजाः । ऋतऽवा । बृहस्पतिः । आङ्गिरसः । हविष्मान् । द्विबर्हऽज्मा । प्राघर्मऽसत् । पिता । नः । आ । रोदसी इति । वृषभः । रोरवीति ॥ १ ॥

**जनाय चिद् य ईवत उ लोकं बृहस्पतिर्देवहूतौ चकार ।**
**घ्नन् वृत्राणि वि पुरो दर्दरीति जयं[1] छत्रूंरमित्रान् पृत्सु साहन् ॥ २ ॥**

जनाय । चित् । यः । ईवते । ऊं इति । लोकम् । बृहस्पतिः । देवऽहूतौ । चकार । घ्नन् । वृत्राणि । वि । पुरः । दर्दरीति । जयन् । शत्रून् । अमित्रान् । पृत्ऽसु । सहन् ॥

**बृहस्पतिः समजयद् वसूनि महो व्रजान् गोमतो देव एषः ।**
**अपः सिषासन्त्स्व१रप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ ३ ॥**

बृहस्पतिः । सम् । अजयत् । वसूनि । महः । व्रजान् । गोऽमतः । देवः । एषः । अपः । सिसासन् । स्वः । अप्रतिऽइतः । बृहस्पतिः । हन्ति । अमित्रम् । अर्कैः ॥ ३ ॥

इति सप्तमेऽनुवाके एकोनविंशं सूक्तम् ।

इति सप्तमोऽनुवाकः ।

'इमां धियं सप्तशीर्ष्णीं पिता नः' **इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।**

---

१. जयन् K,R.  २. शत्रू॰ B.

इमां धियं सप्तशीर्ष्णीं पिता न ऋतप्रजातां बृहतीमविन्दत् ।
तुरीयं स्विज्जनयद् विश्वजन्योऽयास्य उक्थमिन्द्राय शंसन् ॥ १ ॥

इमाम् । धियम् । सप्तऽशीर्ष्णीम् । पिता । नः । ऋतऽप्रजाताम् । बृहतीम् । अविन्दत् ।
तुरीयम् । स्वित् । जनयत् । विश्वऽजन्यः । अयास्यः । उक्थम् । इन्द्राय । शंसन् ॥ १ ॥

ऋतं शंसन्त ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः ।
विप्रं पदमङ्गिरसो दधाना यज्ञस्य धाम प्रथमं मनन्त ॥ २ ॥

ऋतम् । शंसन्तः । ऋजु । दीध्यानाः । दिवः । पुत्रासः । असुरस्य । वीराः ।
विप्रम् । पदम् । अङ्गिरसः । दधानाः । यज्ञस्य । धाम । प्रथमम् । मनन्त ॥ २ ॥

हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् ।
बृहस्पतिरभिकनिक्रदद् गा उत प्रास्तौदुच्च विद्वाँ अगायत् ॥ ३ ॥

हंसैःऽइव । सखिऽभिः । वावदत्ऽभिः । अश्मन्ऽमयानि । नहना । विऽअस्यन् ।
बृहस्पतिः । अभिऽकनिक्रदत् । गाः । उत । प्र । अस्तौत्[1] । उत् । च । विद्वान् । अगायत्[2] ॥

अवो द्वाभ्यां पर एकया गा गुहा तिष्ठन्तीरनृतस्य सेतौ ।
बृहस्पतिस्तमसि ज्योतिरिच्छन्नुदुस्रा आकर्वि हि तिस्र आवः ॥ ४ ॥

अवः । द्वाभ्याम् । परः । एकया । गाः । गुहा । तिष्ठन्तीः । अनृतस्य । सेतौ ।
बृहस्पतिः । तमसि । ज्योतिः । इच्छन् । उत् । उस्राः । आ । अकः । वि । हि ।
तिस्रः । आवरित्यावः ॥ ४ ॥

विभिद्या पुरं शयथेमपाचीं निस्त्रीणि साकमुदधेरकृन्तत् ।
बृहस्पतिरुषसं सूर्यं गामर्कं विवेद स्तनयन्निव[3] द्यौः ॥ ५ ॥

विऽभिद्य । पुरम् । शयथा । ईम् । अपाचीम् । निः । त्रीणि । साकम् । उदऽधेः । अकृन्तत् । बृहस्पतिः । उषसम् । सूर्यम् । गाम् । अर्कम् । विवेद । स्तनयन्ऽइव । द्यौः ॥ ५ ॥

इन्द्रो वलं रक्षितारं दुघानां करेणेव वि चकर्ता रवेण ।
स्वेदाञ्जिभिराशिरमिच्छमानोऽरोदयत् पणिमा गा अमुष्णात् ॥ ६ ॥

---

1. अस्तोत् P. 2. °युत P. 3. °यं मिव B,Dc,Ca.

इन्द्रः । वलम् । रक्षितारम् । दुघानाम् । करेणऽइव । वि । चकर्त । रवेण ।
स्वेदाञ्जिऽभिः । आऽशिरम् । इच्छमानः । अरोदयत् । पणिम् । आ । गाः । अमुष्णात् ॥६॥

**स ईं सत्येभिः सखिभिः[1] शुचद्भिर्गोधायसं वि धनसैरदर्दः ।**
**ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणं व्यानट् ॥ ७ ॥**

सः । ईम् । सत्येभिः । सखिऽभिः । शुचत्ऽभिः । गोऽधायसम् । वि । धनऽसैः । अदर्दरित्यदर्दः । ब्रह्मणः । पतिः । वृषऽभिः । वराहैः । घर्मऽस्वेदेभिः । द्रविणम् । वि । आनट् ॥

**ते सत्येन मनसा गोपतिं गा इयानास[2] इषणयन्त धीभिः ।**
**बृहस्पतिर्मिथोअवद्यपेभिरुदुस्रिया असृजत स्वयुग्भिः ॥ ८ ॥**

ते । सत्येन । मनसा । गोऽपतिम् । गाः । इयानासः । इषणयन्त । धीभिः ।
बृहस्पतिः । मिथःऽअवद्यपेभिः । उत् । उस्रियाः । असृजत । स्वयुक्ऽभिः ॥ ८ ॥

**तं वर्धयन्तो मतिभिः शिवाभिः सिंहमिव नानदतं सधस्थे ।**
**बृहस्पतिं वृषणं शूरसातौ भरेभरे अनु मदेम जिष्णुम् ॥ ९ ॥**

तम् । वर्धयन्तः । मतिऽभिः । शिवाभिः । सिंहम्ऽइव । नानदतम् । सधऽस्थे ।
बृहस्पतिम् । वृषणम् । शूरऽसातौ । भरेऽभरे । अनु । मदेम । जिष्णुम् ॥ ९ ॥

**यदा वाजमसनद् विश्वरूपमा द्यामरुक्षदुत्तराणि सद्म ।**
**बृहस्पतिं वृषणं वर्धयन्तो नाना सन्तो बिभ्रतो ज्योतिरासा ॥ १० ॥**

यदा । वाजम् । असनत् । विश्वऽरूपम् । आ । द्याम् । अरुक्षत् । उत्ऽतराणि । सद्म ।
बृहस्पतिम् । वृषणम् । वर्धयन्तः । नाना । सन्तः । बिभ्रतः । ज्योतिः । आसा ॥१०॥

**सत्यामाशिषं कृणुता वयोधै कीरिं चिद्ध्यवथ स्वेभिरेवैः ।**
**पश्चा मृधो अप भवन्तु विश्वास्तद् रोदसी शृणुतं विश्वमिन्वे ॥ ११ ॥**

सत्याम् । आऽशिषम् । कृणुत । वयःऽधै । कीरिम् । चित् । हि । अवथ । स्वेभिः । एवैः ।
पश्चा । मृधः । अप । भवन्तु । विश्वाः । तत् । रोदसी इति । शृणुतम् । विश्वमिन्वे इति विश्वम्ऽइन्वे ॥ ११ ॥

---

१. सखिभि B.        २. ईया° B,B^h.

इन्द्रो॑ म॒ह्ना म॑ह॒तो अ॑र्ण॒वस्य॒ वि मू॒र्धान॑मभिनदर्बु॒दस्य॑ ।
अह॒न्नहि॒मरि॑णात् स॒प्त सिन्धू॑न् दे॒वैर्द्या॑वापृथिवी॒ प्राव॑तं नः ॥ १२ ॥

इन्द्रः॑ । म॒ह्ना । म॒ह॒तः । अ॒र्ण॒वस्य॑ । वि । मू॒र्धान॑म् । अ॒भि॒न॒त् । अ॒र्बु॒दस्य॑ ।
अह॑न् । अहि॑म् । अरि॑णात् । स॒प्त । सिन्धू॑न् । दे॒वैः । द्या॒वा॒पृ॒थि॒वी॒ इति॑ । प्र । अ॒व॒त॒म् । न॒ः ॥१२॥

इति अष्टमेऽनुवाके प्रथमं सूक्तम् ।

अतिरात्रे मध्यमे पर्याये 'अभि त्वा वृषभा सुते' ( अ २०,२२ ), 'अभि प्र गोपतिं गिरा' (अ २०,९२) एतौ स्तोत्रियानुरूपौ उक्थशंसनधर्मकौ भवतः । तद् उक्तं वैताने— " 'अभि त्वा वृषभा सुते', 'अभि प्र गोपतिं गिरा' इति स्तोत्रियानुरूपौ" ( वैताश्रौ २६,९ ) इति ।

तथा पृष्ठ्यषडहस्य षष्ठेऽहनि प्रातःसवने 'अभि प्र गोपतिं गिरा' इत्येकविंशतिमृच आवपते । तद् उक्तं वैताने—"षष्ठे 'अभि प्र गोपतिं गिरा' इत्येकविंशतिः" ( वैताश्रौ ३२,५ ) इति ।

तथा अभिजिति 'अभि प्र गोपतिं गिरा' इत्याज्यस्तोत्रियो भवति । तद् उक्तं वैताने—" अभिजिति 'अभि प्र गोपतिं गिरा' इति च" ( वैताश्रौ ४०,९ ) इति ।

तथा त्रिककुद्दशाहे अस्य विनियोगः 'क ईं वेद सुते सचा' ( अ २०,५३ ) इत्यनेन सह उक्तः ।

अ॒भि प्र गोप॑तिं गि॒रेन्द्र॑मर्च॒ यथा॑ वि॒दे । सू॒नुं स॒त्यस्य॒ सत्प॑तिम् ॥१॥

अ॒भि । प्र । गोऽप॑तिम् । गि॒रा । इन्द्र॑म् । अ॒र्च॒ । यथा॑ । वि॒दे । सू॒नुम् । स॒त्यस्य॑ । सत्ऽप॑तिम् ॥१॥

आ हर॑यः [1]ससृ॒ज्रि॒रेऽरु॑षी॒रधि॑ ब॒र्हिषि॑ । यत्रा॒भि सं॒नवा॑महे ॥ २ ॥

आ । हर॑यः । स॒सृ॒ज्रि॒रे । अरु॑षीः । अधि॑ । ब॒र्हिषि॑ । यत्र॑ । अ॒भि । स॒म्ऽनवा॑महे ॥२॥

इन्द्रा॑य॒ गाव॑ आ॒शिरं॑ दु॒दु॒ह्रे व॒ज्रिणे॒ मधु॑ । यत् सी॑मुपह्व॒रे वि॒दत् ॥३॥

इन्द्रा॑य । गाव॑ः । आ॒ऽशिर॑म् । दु॒दु॒ह्रे । व॒ज्रिणे॑ । मधु॑ । यत् । सीम् । उ॒प॒ऽह्व॒रे । वि॒दत् ॥३॥

उद् यद् ब्र॒ध्नस्य॑ वि॒ष्टपं॑ गृ॒हमिन्द्र॑श्च॒ गन्व॑हि ।
मध्वः॑ पी॒त्वा स॑चेवहि॒ त्रिः स॒प्त सख्युः॑ प॒दे ॥ ४ ॥

---

1. ससृज्रिरे° B,Bh; पृ २०६७ टि १ द्र.

उत् । यत् । ब्रध्नस्यं । विष्टपम् । गृहम् । इन्द्रः । च । गन्वहि ।
मध्वः । पीत्वा । सचेवहि । त्रिः । सप्त । सख्युः । पदे ॥ ४ ॥

अर्चत प्रार्चत प्रियमेधासो अर्चत । अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चत ॥५॥

अर्चत । प्र । अर्चत । प्रियऽमेधासः । अर्चत । अर्चन्तु । पुत्रकाः । उत । पुरम् । न ।
धृष्णु । अर्चत ॥ ५ ॥

अवं स्वराति गर्गरो गोधा परि सनिष्वणत्[1] ।
पिङ्गा परि चनिष्कददिन्द्राय ब्रह्मोद्यतम् ॥ ६ ॥

अवं । स्वराति । गर्गरः । गोधा । परि । सनिस्वनत् ।
पिङ्गा । परि । चनिस्कदत् । इन्द्राय । ब्रह्म । उत्ऽयतम् ॥ ६ ॥

आ यत् पतन्त्येन्यः सुदुघा अनपस्फुरः ।
अपस्फुरं गृभायत सोममिन्द्राय पातवे ॥ ७ ॥

आ । यत् । पतन्ति । एन्यः । सुऽदुघाः । अनपऽस्फुरः ।
अपऽस्फुरम् । गृभायत । सोमम् । इन्द्राय । पातवे ॥ ७ ॥

अपादिन्द्रो अपादग्निर्विश्वे देवा अमत्सत ।
वरुण इदिह क्षयत् तमापो अभ्यनूषत वत्सं संशिश्वरीरिव ॥ ८ ॥

अपात् । इन्द्रः । अपात् । अग्निः । विश्वे । देवाः । अमत्सत ।
वरुणः । इत् । इह । क्षयत् । तम् । आपः । अभि । अनूषत । वत्सम् । संशिश्वरीःऽइव ॥

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥ ९ ॥

सुऽदेवः । असि । वरुण । यस्य । ते । सप्त । सिन्धवः ।
अनुऽक्षरन्ति । काकुदम् । सूर्म्यम् । सुषिराम्ऽइव ॥ ९ ॥

यो 'व्यतीँरफाणयत् सुयुक्ताँ उप दाशुषे[2] ।
तक्को नेता तदिद् वपुरुपमा[3] यो अमुच्यत ॥ १० ॥

---

१. सनिष्णवत् K, २. °श्यतीं° RW. ३. वपुरु° Bh.

यः । व्यतीन् । अफाणयत् । सुऽयुक्तान् । उप । दाशुषे ।
तक्वः । नेता । तत् । इत् । वपुः । उपऽमा । यः । अमुच्यत ॥ १० ॥

**अतीदु शक्र ओहत इन्द्रो विश्वा अति द्विषः ।**
**भिनत् कनीनं ओदनं पच्यमानं परो गिरा ॥ ११ ॥**

अति । इत् । ऊं इति । शक्रः । ओहते । इन्द्रः । विश्वाः । अति । द्विषः ।
भिनत् । कनीनः । ओदनम् । पच्यमानम् । परः । गिरा ॥ ११ ॥

**अर्भको न कुमारकोऽधि तिष्ठन्नवं रथम् ।**
**स पक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतुम् ॥ १२ ॥**

अर्भकः । न । कुमारकः । अधि । तिष्ठत् । नवम् । रथम् ।
सः । पक्षत् । महिषम् । मृगम् । पित्रे । मात्रे । विभुऽक्रतुम् ॥ १२ ॥

**आ तू सुशिप्र दंपते रथं तिष्ठा हिरण्ययम् ।**
**अधं द्युक्षं सचेवहि सहस्रपादमरुषं स्वस्तिगामनेहसम् ॥ १३ ॥**

आ । तु । सुऽशिप्र । दम्ऽपते । रथम् । तिष्ठ । हिरण्ययम् ।
अध । द्युक्षम् । सचेवहि । सहस्रऽपादम् । अरुषम् । स्वस्तिऽगाम् । अनेहसम् ॥ १३ ॥

**तं घेमित्था नमस्विन उप स्वराजमासते ।**
**अर्थं चिदस्य सुधितं यदेतव आवर्तयन्ति दावने ॥ १४ ॥**

तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते ।
अर्थम् । चित् । अस्य । सुऽधितम् । यत् । एतवे । आऽवर्तयन्ति । दावने ॥ १४ ॥

**अनु प्रत्नस्यौकसः प्रियमेधास एषाम् ।**
**पूर्वामनु प्रयतिं वृक्तबर्हिषो हितप्रयस आशत ॥ १५ ॥**

अनु । प्रत्नस्य । ओकसः । प्रियऽमेधासः । एषाम् ।
पूर्वाम् । अनु । प्रऽयतिम् । वृक्तऽबर्हिषः । हितऽप्रयसः । आशत ॥ १५ ॥

**यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।**
**विश्वासां तरुता पृतनानां ज्येष्ठो यो वृत्रहा गृणे ॥ १६ ॥**

यः । राजा । चर्षणीनाम् । याता । रथेऽभिः । अध्रिऽगुः ।
विश्वासाम् । तरुता । पृतनानाम् । ज्येष्ठः । यः । वृत्रऽहा । गृणे ॥ १६ ॥

**इन्द्रं तं शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि ।**
**हस्ताय वज्रः प्रति धायि दर्शतो महो दिवे न सूर्यः ॥ १७ ॥**

इन्द्रम् । तम् । शुम्भ । पुरुऽहन्मन् । अवसे । यस्य । द्विता । विऽधर्तरि ।
हस्ताय । वज्रः । प्रति । धायि । दर्शतः । महः । दिवे । न । सूर्यः ॥ १७ ॥

**नकिष्टं कर्मणा नशद् यश्चकार सदावृधम् ।**
**इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्ण्वोजिसम् ॥ १८ ॥**

नकिः । तम् । कर्मणा । नशत् । यः । चकार । सदाऽवृधम् ।
इन्द्रम् । न । यज्ञैः । विश्वऽगूर्तम् । ऋभ्वसम् । अधृष्टम् । धृष्णुऽओजसम् ॥ १८ ॥

**अषाल्हमुग्रं[1] पृतनासु सासहिं यस्मिन् महीरुरुज्रयः ।**
**सं धेनवो जायमाने अनोनवुर्द्यावः[2] क्षामो अनोनवुः ॥ १९ ॥**

अषाल्हम् । उग्रम् । पृतनासु । ससहिम् । यस्मिन् । महीः । उरुऽज्रयः ।
सम् । धेनवः । जायमाने । अनोनवुः । द्यावः । क्षामः । अनोनवुः ॥ १९ ॥

**यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।**
**न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥ २० ॥**

यत् । द्यावः । इन्द्र । ते । शतम् । शतम् । भूमीः । उत । स्युरिति स्युः ।
न । त्वा । वज्रिन् । सहस्रम् । सूर्याः । अनु । न । जातम् । अष्ट । रोदसी इति ॥२०॥

**आ पप्राथ महिना वृष्ण्या वृषन् विश्वा शविष्ठ शवसा ।**
**अस्माँ अव मघवन् गोमति व्रजे वज्रिञ् चित्राभिरूतिभिः ॥ २१ ॥**

आ । पप्राथ । महिना । वृष्ण्या । वृषन् । विश्वा । शविष्ठ । शवसा ।
अस्मान् । अव । मघऽवन् । गोऽमति । व्रजे । वज्रिन् । चित्राभिः । ऊतिऽभिः ॥ २१ ॥

**इति अष्टमेऽनुवाके द्वितीयं सूक्तम् ।**

---

१. अषांळ्ह° K,Km,V,Dc, ऋ ८,७०,४; अषाळ्ह° C.　　२. °द्यांवः B,R,Cs.

दशरात्रे दशमेऽहनि 'उत् त्वा मन्दन्तु' इति आज्यस्तोत्रियो भवति। तद् उक्तं वैताने — " 'उत् त्वा मन्दन्तु' इत्याज्यस्तोत्रियः" ( वैताश्रौ ३३,२३ ) इति।

तथा श्येनसंदंशाजिरवज्रेषु एकाहेषु 'सुरूपकृत्नुमूतये' ( अ २०,५७ ), 'उत् त्वा मन्दन्तु स्तोमाः' ( अ २०,९३ ), 'त्वामिद्धि हवामहे' ( अ २०,९८ ) इत्याद्यावाज्यस्तोत्रियौ विकल्पितौ भवतः। तृतीयः पृष्ठस्तोत्रियो भवति। तद् उक्तं वैताने — "श्येनसंदंशाजिरवज्रेषु 'सुरूपकृत्नुमूतये', 'उत् त्वा मन्दन्तु स्तोमाः', 'त्वामिद्धि हवामहे' इति" ( वैताश्रौ ३९,५ ) इति।

महाव्रते प्रातःसवने 'ईङ्खयन्तीरपस्युवः' (अ २०,९३,४) इति पञ्चर्चं सूक्तम् आवापस्थाने आवपते। तद् उक्तं वैताने — " 'ईङ्खयन्तीरपस्युवः' इत्यावपते" (वैताश्रौ ३४,७) इति।

उत् त्वा मन्दन्तु स्तोमाः कृणुष्व राधो अद्रिवः। अव ब्रह्मद्विषो जहि ॥ १ ॥

उत्। त्वा। मन्दन्तु। स्तोमाः। कृणुष्व। राधः। अद्रिऽवः। अव। ब्रह्मऽद्विषः। जहि ॥

पदा 'पणीँरराधसो नि बाधस्व महाँ असि। नहि त्वा कश्चन प्रति ॥ २ ॥

पदा। पणीन्। अराधसः। नि। बाधस्व। महान्। असि। नहि। त्वा। कः। चन। प्रति ॥

त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम्। त्वं राजा जनानाम् ॥ ३ ॥

त्वम्। ईशिषे। सुतानाम्। इन्द्र। त्वम्। असुतानाम्। त्वम्। राजा। जनानाम् ॥ ३ ॥

ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते। भेजानासः सुवीर्यम् ॥ ४ ॥

ईङ्खयन्तीः। अपस्युवः। इन्द्रम्। जातम्। उप। आसते। भेजानासः। सुऽवीर्यम् ॥ ४ ॥

त्वमिन्द्र बलादधि सहसो जात ओजसः। त्वं वृषन् वृषेदसि ॥ ५ ॥

त्वम्। इन्द्र। बलात्। अधि। सहसः। जातः। ओजसः। त्वम्। वृषन्। वृषा। इत्। असि ॥ ५ ॥

त्वमिन्द्रासि वृत्रहा व्य१न्तरिक्षमतिरः। उद् द्यामस्तभ्ना ओजसा ॥ ६ ॥

त्वम्। इन्द्र। असि। वृत्रऽहा। वि। अन्तरिक्षम्। अतिरः। उत्। द्याम्। अस्तभ्नाः। ओजसा ॥ ६ ॥

त्वमिन्द्र सजोषसमर्कं बिभर्षि बाह्वोः। वज्रं शिशान ओजसा ॥ ७ ॥

त्वम्। इन्द्र। सऽजोषसम्। अर्कम्। बिभर्षि। बाह्वोः। वज्रम्। शिशानः। ओजसा ॥ ७ ॥

---

१. पुणीँ॰ RW.

त्वमिन्द्राभिभूरसि विश्वा जातान्योजसा । स विश्वा भुव आभवः ॥ ८ ॥
त्वम् । इन्द्र । अभिऽभूः । असि । विश्वा । जातानि । ओजसा । सः । विश्वाः । भुवः ।
आ । अभवः ॥ ८ ॥

इति अष्टमेऽनुवाके तृतीयं सूक्तम् ।

तृतीये छन्दोमेऽहनि 'आ यात्विन्द्रः स्वपतिर्मदाय' इत्यस्य 'अध्वर्यवोऽरुणम्' ( अ २०,८७ ) इत्यनेन सह उक्तो विनियोगः ।

आ यात्विन्द्रः स्वपतिर्मदाय यो धर्मणा[1] तूतुजानस्तुविष्मान् ।
प्रत्वक्षाणो अति विश्वा सहांस्यपारेण महता वृष्ण्येन ॥ १ ॥
आ । यातु । इन्द्रः । स्वऽपतिः । मदाय । यः । धर्मणा । तूतुजानः । तुविष्मान् ।
प्रऽत्वक्षाणः । अति । विश्वा । सहांसि । अपारेण । महता । वृष्ण्येन ॥ १ ॥

सुष्ठामा रथः सुयमा हरी ते मिम्यक्ष[2] वज्रो नृपते गभस्तौ ।
शीभं [3]राजन् सुपथा[3] याह्यर्वाङ् वर्धाम[4] ते पपुषो वृष्ण्यानि ॥ २ ॥
सुऽस्थामा । रथः । सुऽयमा । हरी इति । ते । मिम्यक्ष । वज्रः । नृऽपते । गभस्तौ ।
शीभम् । राजन् । सुऽपथा । आ । याहि । अर्वाङ् । वर्धाम । ते । पपुषः । वृष्ण्यानि ॥२॥

एन्द्रवाहो नृपतिं वज्रबाहुमुग्रमुग्रासस्तविषास एनम् ।
प्रत्वक्षसं वृषभं सत्यशुष्ममेमस्मत्रा सधमादो वहन्तु ॥ ३ ॥
आ । इन्द्रवाहः । नृऽपतिम् । वज्रऽबाहुम् । उग्रम् । उग्रासः । तविषासः[5] । एनम् ।
प्रऽत्वक्षसम । वृषभम् । सत्यऽशुष्मम । आ । ईम् । अस्मऽत्रा । सधऽमादः । वहन्तु ॥ ३ ॥

एवा पतिं द्रोणसाचं सचेतसमूर्ज[6] स्कम्भं धरुण आ वृषायसे ।
ओजः कृष्व[7] सं गृभाय त्वे अप्यसो यथा केनिपानामिनो वृधे ॥ ४ ॥
एव । पतिम् । द्रोणऽसाचम् । सऽचेतसम् । ऊर्जः । स्कम्भम् । धरुणे । आ । वृषऽयसे ।
ओजः । कृष्व । सम् । गृभाय । त्वे इति । अपि । असः । यथा । केऽनिपानाम् । इनः । वृधे ॥

---

१. ब्रह्मणा K.　२. °क्षद् K.　३. °जंत्सु° C; °जन्त्सु° ऋ १०,४४,२.
४. वर्धाप K.　५. तविषासः P.　६. °मूर्जः B,C,D,Cs, ऋ १०,४४,४.　७. कृणुष्व K.

गम॑न्न॒स्मे वसू॒न्या हि शंसि॑षं स्वा॒शिषं॒ भर॒मा या॑हि सो॒मिनः॑ ।
त्वमी॑शिषे॒ सास्मिन्ना स॑त्सि ब॒र्हिष्य॑नाधृ॒ष्या तव॒ पात्रा॑णि॒ धर्म॑णा ॥ ५ ॥

गम॑न् । अ॒स्मे इति॑ । वसू॑नि । आ । हि । शंसि॑षम् । सु॒ऽआ॒शिष॑म् । भर॑म् । आ । या॒हि॒ । सो॒मिनः॑ । त्वम् । ई॒शि॒षे॒ । सः । अ॒स्मिन् । आ । स॒त्सि॒ । ब॒र्हिषि॑ । अ॒ना॒धृ॒ष्या । तव॑ । पात्रा॑णि । धर्म॑णा ॥ ५ ॥

पृ॒थक् प्राय॑न् प्र॒थ॒मा दे॒वहू॑तयो॒ऽकृ॑ण्वत श्र॒व॒स्या॑नि दु॒ष्टरा॑ ।
न ये शे॒कुर्य॒ज्ञिया॒ं नाव॑मा॒रुह॑मी॒मैव ते न्य॑विशन्त॒ केप॑यः ॥ ६ ॥

पृथ॑क् । प्र । आ॒य॒न् । प्र॒थ॒माः । दे॒वऽहू॑तयः । अकृ॑ण्वत । श्र॒व॒स्या॑नि । दु॒स्तरा॑ । न । ये । शे॒कुः । य॒ज्ञिया॑म् । नाव॑म् । आ॒ऽरुह॑म् । ई॒मा । ए॒व । ते । नि । अ॒वि॒श॒न्त॒ । केप॑यः ॥६॥

ए॒वैवापा॒गप॑रे[1] सन्तु दू॒ढ्यो॒ऽश्वा॑[2] येषां॑ दु॒र्युज॑ आयुयु॒ज्रे ।
इ॒त्था ये प्रागुप॑रे॒ सन्ति॑ दा॒वने॑ पु॒रूणि॒ यत्र॑ व॒युना॑नि॒ भोज॑ना ॥ ७ ॥

ए॒व । ए॒व । अपा॑क् । अप॑रे । स॒न्तु॒[3] । दु॒ःऽध्यः॑ । अश्वाः॑[4] । येषा॑म् । दुः॒ऽयुजः॑ । आ॒ऽयु॒यु॒ज्रे । इ॒त्था । ये । प्राक् । उप॑रे । सन्ति॑ । दा॒वने॑ । पु॒रूणि॑[5] । यत्र॑ । व॒युना॑नि । भोज॑ना ॥७॥

गि॒रीँर॒ज्रान् रेज॑मानाँ अधारय॒द् द्यौः क्र॑न्दद॒न्तरि॑क्षाणि कोपयत् ।
स॒मी॒ची॒ने धि॒षणे॒ वि ष्क॑भायति॒ वृष्ण॑ः पी॒त्वा मद॑ उ॒क्थानि॑ शंसति ॥८॥

गि॒रीन् । अ॒ज्रान् । रेज॑मानान् । अ॒धा॒र॒य॒त् । द्यौः । क्र॒न्द॒त् । अ॒न्तरि॑क्षाणि । को॒प॒य॒त् । स॒मी॒ची॒ने इति॑ स॒म्ऽई॒ची॒ने । धि॒षणे॒ इति॑ । वि । स्क॒भा॒य॒ति॒ । वृष्ण॑ः । पी॒त्वा । मदे॑ । उ॒क्थानि॑ । शं॒स॒ति॒ ॥ ८ ॥

इ॒मं बि॑भर्मि॒ सुकृ॑तं ते अ॒ङ्कुशं॒ येना॑रु॒जासि॑ मघवञ्छफा॒रुजः॑ ।
अ॒स्मिन्त्सु ते॒ सव॑ने अस्त्वो॒क्य॑ं सु॒त इ॒ष्टौ म॑घवन् बो॒ध्याभ॑गः ॥ ९ ॥

इ॒मम् । बि॒भ॒र्मि॒ । सु॒ऽकृ॑तम् । ते॒ । अ॒ङ्कु॒शम् । येन॑ । आ॒ऽरु॒जासि॑ । म॒घ॒ऽव॒न् । श॒फ॒ऽआ॒रुजः॑ । अ॒स्मिन् । सु । ते॒ । अ॒स्तु॒ । ओ॒क्य॑म् । सु॒ते । इ॒ष्टौ । म॒घ॒ऽव॒न् । बो॒धि॒ । आ॒ऽभ॑गः ॥

---

१. पुवैवपाग॑ B. २. दूढ्यो॑ B. ३. सन्तु P. ४. °श्वाः P.
५. पुरूणि P.

गोभिष्टरेमामतिं दुरेवां यवेन[1] क्षुधं पुरुहूत विश्वाम्[2] ।
वयं राजभिः[3] प्रथमा [4]धनान्यस्माकेन वृजनेना जयेम[4] ॥ १० ॥

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् । पुरुऽहूत । विश्वाम् ।
वयम् । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥ १० ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः[5] कृणोतु ॥ ११ ॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥

**इति अष्टमेऽनुवाके चतुर्थं सूक्तम् ।**

**महाव्रते** 'त्रिकद्रुकेषु महिषः' ( अ २०,९५,१ ), 'प्रो ष्वस्मै पुरोरथम्' ( अ २०,९५,२ ) **इति पृष्ठस्तोत्रियानुरूपौ भवतः । तद् उक्तं वैताने**— " 'त्रिकद्रुकेषु महिषः', 'प्रो ष्वस्मै पुरोरथम्' इति स्तोत्रियानुरूपौ" ( वैताश्रौ ३४,१९ ) **इति ।**

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत्[6] सोममपिबद् विष्णुना सुतं यथावशत्[7] ।
स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥१॥[8]

त्रिऽकद्रुकेषु । महिषः । यवऽआशिरम् । तुविऽशुष्मः । तृपत् । सोमम् । अपिबत् । विष्णुना ।
सुतम् । यथा । अवशत् । सः । ईम् । ममाद । महि । कर्म । कर्तवे । महाम् । उरुम् ।
सः । एनम् । सश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः । इन्दुः ॥ १ ॥

प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत् संगे समत्सु वृत्रहाऽस्माकं बोधि चोदिता[1] नभन्ता-
मन्यकेषां ज्याका अधि धन्वसु ॥ २ ॥

---

१. यवेन वा अ २०,८९,१०. २. विश्वे अ. ३. राजसु अ. ४. धनान्य-रिष्टासो वृजनीभिर्जयेम अ. ५. वरीयः अ २०,८९,११. ६. °स्तृम्पत् कौ १,४५७. ७. °वैशम् कौ. ८. अध त्विषीमां ( V मां अ° ) नभ्योजसा क्रिविं युधा भवदा रोदसी अपृणदस्य मज्मना प्र वावृधे । अधत्तान्यं जठरे प्रेमरिच्यत सैनं० ॥ २ ॥ साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः । दाता राधः स्तुवते काम्यं वसु सैनं० ॥३॥ (तु. ऋ २,२२,२;३) इमौ मन्त्रौ B,Bh,Sm प्रान्ते पठन्ति; K,Km,V अपि समर्थयन्ति (K,Km तु क्रमविपर्यासेन). ९. विरमति RW.

प्रो इति । सु । अस्मै । पुरःऽरथम् । इन्द्राय । शूषम् । अर्चत । अभीके । चित् । ऊं इति । लोकऽकृत् । सम्ऽगे । समत्ऽसु । वृत्रऽहा । अस्माकम् । बोधि । चोदिता । नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ २ ॥

त्वं [1]सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।
[2]अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि ष्वजामहे [3]नभ० ॥३॥

त्वम् । सिन्धून् । अव । असृजः । अधराचः । अहन् । अहिम् ।
अशत्रुः । इन्द्र । जज्ञिषे । विश्वम् । पुष्यसि । वार्यम् । तम् । त्वा । परि । स्वजामहे ।० ॥ ३ ॥

वि षु विश्वा अरातयोऽर्यो नशन्त[4] नो धियः ।
अस्तासि शत्रवे वधं यो न इन्द्र जिघांसति या ते रातिर्ददिर्वसु
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ ४ ॥

वि । सु । विश्वाः । अरातयः । अर्यः । नशन्त । नः । धियः । अस्ता । असि । शत्रवे । वधम् । यः । नः । इन्द्र । जिघांसति । या । ते । रातिः । ददिः । वसु । नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ ४ ॥

**इति अष्टमेऽनुवाके पञ्चमं सूक्तम् ।**

**महाव्रते माध्यंदिने सवने** 'तीव्रस्याभिवयसो अस्य पाहि' **इत्येताश्चतुर्विंशतिम् ऋचः आवापस्थाने आवपते । तद् उक्तं वैताने**—" 'तीव्रस्याभिवयसो अस्य पाहि' इति चतुर्विंशतिम् आवपते" ( वैताश्री ३४,२० ) **इति ।**

तीव्रस्याभिवयसो अस्य पाहि सर्वरथा वि हरी इह मुञ्च ।
इन्द्र मा त्वा यजमानासो अन्ये नि रीरमन् तुभ्यमिमे सुतासः ॥ १ ॥

तीव्रस्य । अभिऽवयसः । अस्य । पाहि । सर्वऽरथा । वि । हरी इति । इह । मुञ्च ।
इन्द्र । मा । त्वा । यजमानासः । अन्ये । नि । रीरमन् । तुभ्यम् । इमे । सुतासः ॥ १ ॥

तुभ्यं सुतास्तुभ्यमु सोत्वासस्त्वां गिरः श्वात्र्या आ ह्वयन्ति ।
इन्द्रेदमद्य सवनं जुषाणो विश्वस्य विद्वाँ इह पाहि सोमम् ॥ २ ॥

---

१. सिन्धू॰ RW. २. अशत्रु॰ B. ३. विरमति RW. ४. नः शत B; न शर्त K.

तुभ्यम् । सुताः । तुभ्यम् । ऊं इति । सोत्वासः । त्वाम् । गिरः । श्वात्र्याः । आ । ह्वयन्ति । इन्द्र । इदम् । अद्य । सवनम् । जुषाणः । विश्वस्य । विद्वान् । इह । पाहि । सोमम् ॥२॥

**य उशता मनसा सोममस्मै सर्वहृदा देवकामः सुनोति ।**
**न गा इन्द्रस्तस्य परा ददाति प्रशस्तमिच्चारुमस्मै कृणोति ॥ ३ ॥**

यः । उशता । मनसा । सोमम् । अस्मै । सर्वऽहृदा । देवऽकामः । सुनोति । न । गाः । इन्द्रः । तस्य । परा । ददाति । प्रऽशस्तम् । इत् । चारुम् । अस्मै । कृणोति ॥

**अनुस्पष्टो[1] भवत्येषो अस्य यो अस्मै रेवान् न सुनोति सोमम् ।**
**निररत्नौ मघवा तं दधाति ब्रह्मद्विषो हन्त्यनानुदिष्टः ॥ ४ ॥**

अनुऽस्पष्टः । भवति । एषः । अस्य । यः । अस्मै । रेवान् । न । सुनोति । सोमम् । निः । अरत्नौ । मघऽवा । तम् । दधाति । ब्रह्मऽद्विषः । हन्ति । अननुऽदिष्टः ॥ ४ ॥

**अश्वायन्तो गव्यन्तो वाजयन्तो हवामहे त्वोपगन्तवा उ ।**
**आभूषन्तस्ते सुमतौ नवायां वयमिन्द्र त्वा शुनं हुवेम ॥ ५ ॥**

अश्वऽयन्तः । गव्यन्तः । वाजयन्तः । हवामहे । त्वा । उपऽगन्तवै । ऊं इति । आऽभूषन्तः । ते । सुऽमतौ । नवायाम् । वयम् । इन्द्र । त्वा । शुनम् । हुवेम ॥ ५ ॥

**मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् ।**
**ग्राहिर्जग्राह[2] यद्येतदेनं[3] तस्या[4] इन्द्राग्नी प्र मुमुक्तमेनम् ॥ ६ ॥**

मुञ्चामि । त्वा । हविषा । जीवनाय । कम् । अज्ञातऽयक्ष्मात् । उत । राजऽयक्ष्मात् । ग्राहिः । जग्राह । यदि । एतत् । एनम् । तस्याः । इन्द्राग्नी इति । प्र । मुमुक्तम् । एनम् ॥

**यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव ।**
**तमा हरामि निर्ऋतेरुपस्थादस्पार्शमेनं[5] शतशारदाय ॥ ७ ॥**

यदि । क्षितऽआयुः । यदि । वा । पराऽइतः । यदि । मृत्योः । अन्तिकम् । निऽइतः । एव । तम् । आ । हरामि । निःऽऋतेः । उपऽस्थात् । अस्पार्शम् । एनम् । शतऽशारदाय ॥

---

१. अनुस्पृष्टो B, Cs. २. ग्राह्या गृहीतो पै १,६२,१. ३. यदि वैतदेनं RW. ऋ १०,१६१,१; यद्येष यतस् पै. ४. तत पै. ५. °दस्पार्षमेनं RW. ऋ १०,१६१,२. पै १,६२,२.

सहस्राक्षेण शतवीर्येण[1] शतायुषा हविषाहार्षमेनम् ।
'इन्द्रो यथैनं शरदो नयात्यति' विश्वस्य दुरितस्य पारम् ॥ ८ ॥

सहस्रऽअक्षेण । शतऽवीर्येण । शतऽआयुषा । हविषा । आ । अहार्षम् । एनम् ।
इन्द्रः । यथा । एनम् । शरदः । नयाति । अति । विश्वस्य । दुःऽइतस्य । पारम् ॥ ८ ॥

शतं जीव शरदो वर्धमानः शतं हेमन्तान्छतमु[3] वसन्तान् ।
"शतं त इन्द्रो अग्निः" सविता बृहस्पतिः शतायुषा हविषाहार्षमेनम्[5] ॥ ९ ॥

शतम् । जीव । शरदः । वर्धमानः । शतम् । हेमन्तान् । शतम् । ऊं इति । वसन्तान् ।
शतम् । ते । इन्द्रः । अग्निः । सविता । बृहस्पतिः । शतऽआयुषा । हविषा । आ ।
अहार्षम् । एनम् ॥ ९ ॥

आहार्षमविदं त्वा पुनरागाः पुनर्णवः[6] ।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ॥ १० ॥

आ । अहार्षम् । अविदम् । त्वा । पुनः । आ । अगाः । पुनःऽनवः ।
सर्वऽअङ्ग । सर्वम् । ते । चक्षुः । सर्वम् । आयुः । च । ते । अविदम् ॥ १० ॥

ब्रह्मणाऽग्निः संविदानो रक्षोहा बाधतामितः ।
अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥ ११ ॥

ब्रह्मणा । अग्निः । सम्ऽविदानः । रक्षःऽहा । बाधताम् । इतः ।
अमीवा । यः । ते । गर्भम् । दुःऽनामा । योनिम् । आऽशये ॥ ११ ॥

यस्ते गर्भममीवा दुर्णामा योनिमाशये ।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥ १२ ॥

यः । ते । गर्भम् । अमीवा । दुःऽनामा । योनिम् । आऽशये ।
अग्निः । तम् । ब्रह्मणा । सह । निः । क्रव्यऽअदम् । अनीनशत् ॥ १२ ॥

---

१. शतशारदेन RW. ऋ १०,१६१,३. २. शतं यथेमं (°थैनं RW.) शरदो नयातीन्द्रो RW. ऋ. ३. °न्तां उ° RW. ४. शतमिन्द्राग्नी RW. ऋ. वै १,६२,४. ५, हविषेमं पुनर्हुः RW. ऋ. ६. पुनर्न (र्णं RW.) व RW. ऋ १०,१६१,५.

यस्ते हन्ति पतयन्तं निषत्स्नुं[1] यः सरीसृपम् ।
जातं यस्ते जिघांसति तमितो नाशयामसि ॥ १३ ॥

यः । ते । हन्ति । पतयन्तम् । निऽसत्स्नुम्[2] । यः । सरीसृपम् ।
जातम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ १३ ॥

यस्त ऊरू विहरत्यन्तरा दम्पती शये ।
योनिं यो अन्तरारेल्हि[3] तमितो नाशयामसि ॥ १४ ॥

यः । ते । ऊरू इति । विऽहरति । अन्तरा । दम्पती इति दम्ऽपती । शये ।
योनिम् । यः । अन्तः । आऽरेल्हि । तम् । इतः । नाशयामसि ॥ १४ ॥

यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ १५ ॥

यः । त्वा । भ्राता । पतिः । भूत्वा । जारः । भूत्वा । निऽपद्यते ।
प्रऽजाम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ १५ ॥

यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ १६ ॥

यः । त्वा । स्वप्नेन । तमसा । मोहयित्वा । निऽपद्यते ।
प्रऽजाम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ १६ ॥

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि[4] ।
यक्ष्मं शीर्षण्यं[5] मस्तिष्काज्जिह्वाया वि वृहामि ते[5] ॥ १७ ॥

अक्षीभ्याम् । ते । नासिकाभ्याम् । कर्णाभ्याम् । छुबुकात् । अधि ।
यक्ष्मम् । शीर्षण्यम् । मस्तिष्कात् । जिह्वायाः । वि । वृहामि । ते ॥ १७ ॥

ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्य१मंसाभ्यां [6]बाहुभ्यां वि वृहामि ते[6] ॥ १८ ॥

---

१. निषत्स्नुं C, RW. २. निऽसत्स्नुं P. ३. °रेळिह् K,V, ऋ १०,१६२,४ °रेढि C,K^m,R,Dc. ४. चिबुका° आपमं १,१७,१; आस्यादुत पै ४,७,१. ५. °ष्काल्ललाटाद् वि वृहामसि पै. ६. उरस्तो वि वृहामसि पै ४,७,२.

ग्रीवाभ्यः । ते । उष्णिहाभ्यः । कीकसाभ्यः । अनूक्यात् ।
यक्ष्मम् । दोषण्यम् । अंसाभ्याम् । बाहुऽभ्याम् । वि । वृहामि । ते ॥ १८ ॥

'हृदयात् ते परि क्लोम्नो हलीक्ष्णात्' पार्श्वाभ्याम् ।
यक्ष्मं मतस्नाभ्यां प्लीह्नो यक्नस्ते वि वृहामसि ॥ १९ ॥'

हृदयात् । ते । परि । क्लोम्नः । हलीक्ष्णात् । पार्श्वाभ्याम् ।
यक्ष्मम् । मतस्नाभ्याम् । प्लीह्नः । यक्नः । ते । वि । वृहामसि ॥ १९ ॥

आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोरुदरादधि' ।
यक्ष्मं "कुक्षिभ्यां प्लाशेर्नाभ्या" 'वि वृहामि ते' ॥ २० ॥

आन्त्रेभ्यः । ते । गुदाभ्यः । वनिष्ठोः । उदरात् । अधि ।
यक्ष्मम् । कुक्षिऽभ्याम् । प्लाशेः । नाभ्याः । वि । वृहामि । ते ॥ २० ॥

ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां' प्रपदाभ्याम् ।
यक्ष्मं "भसद्यं १ श्रोणिभ्यां भासदं †भंससो" 'वि वृहामि ते' ॥ २१ ॥

ऊरुऽभ्याम् । ते । अष्ठीवत्ऽभ्याम् । पार्ष्णिऽभ्याम् । प्रऽपदाभ्याम् ।
यक्ष्मम् । भसद्यम् । श्रोणिऽभ्याम् । भासदम् । भंससः । वि । वृहामि । ते ॥ २१ ॥

अस्थिभ्यस्ते मज्जभ्यः' स्नावभ्यो धमनिभ्यः ।
यक्ष्मं "पाणिभ्यामङ्गुलिभ्यो नखेभ्यो वि वृहामि ते" ॥ २२ ॥"

अस्थिऽभ्यः । ते । मज्जऽभ्यः । स्नावऽभ्यः । धमनिऽभ्यः ।
यक्ष्मम् । पाणिऽभ्याम् । अङ्गुलिऽभ्यः । नखेभ्यः । वि । वृहामि । ते ॥ २२ ॥

"अङ्गेअङ्गे लोम्निलोम्नि यस्ते" पर्वणिपर्वणि ।
यक्ष्मं त्वचस्यं ते वयं कश्यपस्य वीबर्हेण विष्वञ्चं वि वृहामसि ॥२३॥"

१. क्लोम्नस्ते हृदयादधि? हलीक्ष्मात् पै ४,७,२. २. नास्ति RW. ३. °द्दोर्हृदयादधि RW. ऋ १०,१६३,३; °राद्गुत पै ४,७,४. ४. मतस्नाभ्यां यक्नः प्लाशिभ्यो RW. ऋ.; पाण्योरङ्गुलिभ्यो नखेभ्यो पै. ५. वि वृहामसि पै.; एवमग्रेऽपि. ६. अष्ठीभ्यां आपमं १, १७,१. ७. श्रोणिभ्यां भासदाद् भंससो RW. ऋ १०,१६३,४; वैप १,२३२६ ○ अपि द्र. † ध्वंसंसो आपमं. ८. वि वृहामसि पै ४,७,६. ९. मांसेभ्यः पै ४,७,५. १०. पृष्टिभ्यो मज्जभ्यो नाभ्या वि वृहामसि पै. ११. मेहनाद् वनंकरणाल्लोमभ्यस्ते नखेभ्यः । यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते RW. ऋ १०,१६३,५. १२. अङ्गादङ्गाल्लोम्नोलोम्नो बर्हं पै ४,७,७. १३. अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ RW. ऋ १०,१६३,६ आपमं.

अङ्गेऽअङ्गे । लोम्निऽलोम्नि । यः । ते । पर्वणिऽपर्वणि ।
यक्ष्मम् । त्वचस्यम् । ते । वयम् । कश्यपस्य । विऽबर्हेण । विष्वञ्चम् । वि । वृहामसि ॥२३॥

**अपेहि मनसस्पतेऽप क्राम परश्चर ।**
**परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः ॥ २४ ॥**

अप । इहि । मनसः । पते । अप । क्राम । परः । चर ।
परः । निःऽऋत्यै । आ । चक्ष्व । बहुधा । जीवतः । मनः ॥ २४ ॥

**इति अष्टमेऽनुवाके षष्ठं सूक्तम् ।**
**इति अष्टमोऽनुवाकः ।**

**बृहस्पतिसवे** 'वयमेनमिदा ह्यः' **इत्यस्य** 'तद् वो गाय सुते सचा' ( अ २०,७८ ) **इत्यनेन सह उक्तो विनियोगः ।**

**तथा सर्वजित्यृषभादिषु अस्य तेनैव सह उक्तो विनियोगः ।**

**तथा त्रिवृदादिषु सूत्रोक्तेषु सप्तसु त्रिरात्रैकाहेषु** 'उभयं शृणवच्च नः' ( अ २०,११३ ), 'वयमेनमिदा ह्यः ( अ २०,१७ ), 'पिबा सोममिन्द्र मन्दतु त्वा' ( अ २०,११७ ) **एते आज्यस्तोत्रिया भवन्ति चकारात् पृष्ठस्तोत्रिया विकल्पिता भवन्ति । तद् उक्तं वैताने**— " त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशनवसप्तदशेषु 'उभयं शृणवच्च नः', 'वयमेनमिदा ह्यः', 'पिबा सोममिन्द्र मन्दतु त्वा' इति" ( वैताश्रौ ४०,८ ) **इति ।**

**तथा त्रिककुद्दशाहे अस्य विनियोगः** 'क ईं वेद सुते सचा' ( अ २०,५३ ) **इत्यनेन सह उक्तः ।**

**वयमेनमिदा ह्योपीपेमेह वज्रिणम् ।**
**तस्मा उ अद्य समना सुतं भरा नूनं भूषत श्रुते ॥ १ ॥**

वयम् । एनम् । इदा । ह्यः । अपीपेम[1] । इह । वज्रिणम् ।
तस्मै । ऊं इति । अद्य । समना । सुतम् । भर । आ । नूनम् । भूषत । श्रुते ॥ १ ॥

**वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।**
**सेमं नः[2] स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥ २ ॥**

वृकः । चित् । अस्य । वारणः । उराऽमथिः । आ । वयुनेषु । भूषति ।
सः[3] । इमम् । नः । स्तोमम् । जुजुषाणः । आ । गहि । इन्द्र । प्र । चित्रया । धिया ॥२॥

---

१. अपीपेम P,P². २. न D,K^m,S^m,Dc. ३. सा P,P².

'कद्रू न्व१स्याकृतमिन्द्रस्यास्ति' पौंस्यम् ।
केनो नु कं श्रोमतेन न शुश्रुवे जनुषः परि वृत्रहा ॥ ३ ॥

कत् । ऊं इति । नु । अस्य । अकृतम् । इन्द्रस्य । अस्ति । पौंस्यम् ।
केनो इति । नु । कम् । श्रोमतेन । न । शुश्रुवे । जनुषः । परि । वृत्रऽहा ॥ ३ ॥

इति नवमेऽनुवाके प्रथमं सूक्तम् ।

श्येनसंदंशाजिरवज्रेषु एकाहेषु 'त्वामिद्धि हवामहे' इत्यस्य विनियोगः 'सुरूपकृत्नुमूतये' ( अ २०,५७ ) इत्यनेन सह उक्तः ।

तथा तनूपृष्ठे षडहे अस्य विनियोगः 'यद् द्याव इन्द्र ते शतम्' ( अ २०,८१ ) इत्यनेन सह उक्तः ।

त्वामिद्धि हवामहे साता[२] वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ १ ॥

त्वाम् । इत् । हि । हवामहे । साता । वाजस्य । कारवः ।
त्वाम् । वृत्रेषु । इन्द्र । सत्ऽपतिम् । नरः । त्वाम् । काष्ठासु । अर्वतः ॥ १ ॥

स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः ।
गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं[३] न जिग्युषे ॥ २ ॥

सः । त्वम् । नः । चित्र । वज्रऽहस्त । धृष्णुऽया । महः । स्तवानः । अद्रिऽवः ।
गाम् । अश्वम् । रथ्यम् । इन्द्र । सम् । किर । सत्रा । वाजम् । न । जिग्युषे ॥ २ ॥

इति नवमेऽनुवाके द्वितीयं सूक्तम् ।

अपूर्वाख्ये एकाहे 'अभि त्वा पूर्वपीतये' इत्येष पृष्ठस्तोत्रियो भवति । तद् उक्तं वैताने—" अपूर्वे 'अभि त्वा पूर्वपीतये' इति" ( वैताश्रौ ३९,६ ) इति ।

अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यम् ॥ १ ॥

अभि । त्वा । पूर्वऽपीतये । इन्द्र । स्तोमेभिः । आयवः ।
सम्ऽईचीनासः । ऋभवः । सम् । अस्वरन् । रुद्राः । गृणन्त । पूर्व्यम् ॥ १ ॥

---

१. कदु न्व१° B,Cs. २. साती मा २७,३७ कौ १,२३४. ३. वाजे B.

अस्येदिन्द्रो 'वावृधे वृष्ण्यं शवो मदे' सुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोऽनु ष्टुवन्ति पूर्वथा ॥ २ ॥

अस्य । इत् । इन्द्रः । ववृधे । वृष्ण्यम् । शवः । मदे । सुतस्य । विष्णवि ।
अध । तम् । अस्य । महिमानम् । आयवः । अनु । स्तुवन्ति । पूर्वऽथा ॥ २ ॥

**इति नवमेऽनुवाके तृतीयं सूक्तम् ।**

**व्रात्यस्तोमाख्येषु एकाहेषु** 'आ त्वेता नि षीदत' (अ २०,६८,११), 'अधा हीन्द्र गिर्वणः' (अ २०,१००) **इति आज्यपृष्ठस्तोत्रियौ यथाक्रमं भवतः । तद् उक्तं वैताने** — "व्रात्यस्तोमेषु 'आ त्वेता नि षीदत', 'अधा हीन्द्र गिर्वणः' इति" (वैताश्रौ ३९,७) ।

**तथा पवित्रादिषु राजसूयैकाहेषु** 'यत् सोममिन्द्र विष्णवि' (अ २०,१११), 'अधा हीन्द्र गिर्वणः' (अ २०,१००), 'अभ्रातृव्यो अना त्वम्' (अ २०,११४), 'त्वम् न इन्द्रा भर' (अ २०,१०८) **एते यथासंभवम् उक्थस्तोत्रिया भवन्ति । चकाराद्** 'यदद्य कच्च वृत्रहन्' (अ २०,११२), 'उभयं शृणवच्च नः' (अ २०,११३) **एतौ आज्यपृष्ठस्तोत्रियौ भवतः ।**

**तथा चतुरहपञ्चाहाहीनदशाहच्छन्दोमदशाहेषु** 'यत् सोममिन्द्र विष्णवि' **एते चत्वारो यथासंभवम् उक्थस्तोत्रिया भवन्ति ।**

**तद् उक्तं वैताने** — "राजसूयेषु 'यत्सोममिन्द्र विष्णवि', 'अधा हीन्द्र गिर्वणः', 'अभ्रातृव्यो अना त्वम्', 'त्वं न इन्द्रा भर' इति च । चतुरहपञ्चाहाहीनदशाहच्छन्दोमदशाहेषु च" (वैताश्रौ ४०,४) **इति ।**

अधा हीन्द्र गिर्वण उप त्वा कामान् महः[1] ससृज्महे[3] । उदेव यन्त उदभिः ॥१॥

अध । हि । इन्द्र । गिर्वणः । उप । त्वा । कामान् । महः । ससृज्महे । उदाऽइव । यन्तः । उदऽभिः ॥ १ ॥

वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि । वावृध्वांसं चिदद्रिवो दिवेदिवे ॥ २ ॥

वाः । न । त्वा । यव्याभिः । वर्धन्ति । शूर । ब्रह्माणि । ववृध्वांसम् । चित् । अद्रिऽवः । दिवेऽदिवे ॥ २ ॥

युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे । इन्द्रवाहा वचोयुजा ॥३॥

---

१. वावृधे वृष्ण्यं शवो मदे K. २. महत् K. ३. ससृग्महे B.C.

युञ्जन्ति । हरी इति । इषिरस्य । गाथया । उरौ । रथे । उरुऽयुगे । इन्द्रऽवाहा । वचःऽयुजा ॥

इति नवमेऽनुवाके चतुर्थं सूक्तम् ।

अग्निष्टुत्सु एकाहेषु 'ईळेन्यो नमस्यः' (अ २०,१०२), 'अग्निं दूतं वृणीमहे' (अ २०,१०१), 'अग्निमीळिष्वावसे' (अ २०,१०३), 'अग्न आ याह्यग्निभिः' (अ २०,१०३,२) एषु आद्यौ आज्यस्तोत्रियौ विकल्पितौ भवतः । उत्तरौ पृष्ठस्तोत्रियौ विकल्पितौ भवतः । तद् उक्तं वैताने—"अग्निष्टुत्सु 'ईळेन्यो नमस्यः', 'अग्निं दूतं वृणीमहे', 'अग्निमीळिष्वावसे', 'अग्न आ याह्यग्निभिः' इति" (वैताश्रौ ३९,८) इति ।

तथा विराजेग्नेःस्तोमेग्नेःकुलाये 'अग्निं दूतं वृणीमहे', 'अग्निमीळिष्वावसे' एतौ आज्यपृष्ठस्तोत्रियौ भवतः । तद् उक्तं वैताने—"विराजेग्नेःस्तोमेग्नेःकुलाये 'अग्निं दूतं वृणीमहे', 'अग्निमीळिष्वावसे' इति" (वैताश्रौ ४०,२) ।

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥१॥

अग्निम् । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् । अस्य । यज्ञस्य । सुऽक्रतुम् ॥१॥

अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥२॥

अग्निम्ऽअग्निम् । हवीमऽभिः । सदा । हवन्त । विश्पतिम् । हव्यऽवाहम् । पुरुऽप्रियम्[1] ॥२॥

अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥ ३ ॥

अग्ने । देवान् । इह । आ । वह । जज्ञानः । वृक्तऽबर्हिषे । असि । होता । नः । ईड्यः ॥३॥

इति नवमेऽनुवाके पञ्चमं सूक्तम् ।

अग्निष्टुत्सु एकाहेषु 'ईळेन्यो नमस्यः' इत्यस्य पूर्वेण सह उक्तो विनियोगः ।

ईळेन्यो[2] नमस्यस्तिरस्तमांसि दर्शतः । समग्निरिध्यते वृषा ॥ १ ॥

ईळेन्यः[3] । नमस्यः । तिरः । तमांसि । दर्शतः । सम् । अग्निः । इध्यते । वृषा ॥ १ ॥

वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तं हविष्मन्त ईळते[4] ॥ २ ॥

वृषो इति । अग्निः । सम् । इध्यते । अश्वः । न । देवऽवाहनः । तम् । हविष्मन्तः । ईळते ॥२॥

वृषणं त्वा वयं वृषन् वृषणः समिधीमहि । अग्ने दीद्यतं बृहत् ॥ ३ ॥

---

1. पुरुऽप्रियम् P². 2. इळेन्यो K,V; इळेन्यो Km; ईळेन्यो Bᵇ,C; इळेन्यो Cs; ईळेन्यो ऋ ३,२७,१३. 3. ईळेन्यः P,P²,J. 4. ईळते K,Km,V, ऋ ३,२७,१४; इळते Bᵇ,C; इळते Cs.

[1]पल्प बद्ध वयो[1] इति ॥ १५ ॥[2] बद्ध[3] वो अघा इति[4] ॥ १६ ॥[5]
[6]अजागार केविका[6] ॥ १७ ॥ [7]अश्वस्य वारो[7] गोशपद्यके[8] ॥ १८
श्येनीपती[9] सा ॥ १९ ॥[10] अनामयोपजिह्विका[11] ॥ २० ॥

इति नवमेऽनुवाके त्रयस्त्रिंशं सूक्तम् ।

को अर्य बहुलिमा[12] इषूनि[13] ॥ १ ॥[14] को असिद्याः[15] पयः[16] ॥ २ ॥
को अर्जुन्याः[17] पयः ॥ ३ ॥ कः कार्ष्ण्याः[18] पयः ॥ ४ ॥
[19]एतं पृच्छ[19] [20]कुहं पृच्छ[20] ॥ ५ ॥ कुहाकं[21] पक्वकं पृच्छ ॥ ६ ॥[22]
[23]यवानो यतिस्वभिः कुभिः[23] ॥ ७ ॥ [24]अकुप्यन्तः कुपायकुः[24] ॥ ८ ॥
आमणको[25] मणत्सकः[26] ॥ ९ ॥ [27]देव त्वप्रतिसूर्य[27] ॥ १० ॥
एनश्चिपङ्क्तिका[28] हविः ॥ ११ ॥[29] प्रदुद्रुदो[30] मघाप्रति[31] ॥ १२ ॥

१. ययो Dc; वायो P². २. पक्को व्रीहियवा इति RW.; बल्बथो इति खि ५,१५,४. ३. बद्ध Sᵐ,P². ४. °यति R,J; य इति P. ५. व्रीहियवा अघा इति RW.; बल्बथो अंथो इति खि. ६. अजगर इवाविका: RW.; अजकोऽरकोऽविका खि ५,१५,५. ७. अश्वस्थवारो E; °स्य वारो Sᵐ; अश्वस्य वारो खि. ८. गोशफद्यके Sᵐ,Cp; गोशफद्यके Dc; गोशपद्यके Cs; गोशफश्च ते RW.; गोः शफः खि. ९. श्येनपर्णी RW. १०. केशिनी श्येनी एनीव खि. ११. अनामयोप° C,R,Sᵐ,P²; °योपजिह्विका RW.; अनामयोपजिह्विका खि. १२. बहुलिमा Dc. १३. इषुनि D; इष्णुनि P. १४. को अर्यावहदिमा दुग्धानि RW.; को अम्ब हुलमायुनि खि ५,१५,६. १५. असियाः R; असिणाः Dc,Cs; असिक्न्याः RW. खि. १६. पयं: E. १७. अर्जुन्याः C; अर्जुन्याः D,R; अर्जुन्याः E,Sᵐ; अर्जुन्याः Dc,Cs. १८. कार्ष्ण्याः RW. १९. एतं पृछ C,D,E,R, Sᵐ,Dc,Cs, खि. २०. कुहं पृछे RW. २१. कुहा कं खि ५,१५,७. २२. कुहाकं पक्वकं पृछ Sᵐ; कुहाकं पक्वकं पृछ Dc; कुहाकं पक्कं पृछ Cs; कुहाकं पक्कं पृछ P²; कुहा कं पक्वकं पृछे RW. २३. यवा वो° C; यवा नो यति स्वभिः कुभिः Dc; यवा नो° Cs; यवा वोर्य तिष्ठन्ति कुक्षिम् RW.; यं आयन्ति अभिस्कुभिः खि. २४. अकुप्यतः कुपायकु Cs; °कुपायकु J; °कुपायवः RW.; अकजन्तः कुमायवः खि. २५. आमणत्को D; अमणिका RW.; आमनको खि. २६. मणछकः C,P,P²; मणत्सकः D; मणत्सखः Sᵐ; मणिछवः RW.; मनस्यकः खि. २७. देव त्वप्रति सूर्ये Sᵐ; देवत्वा प्रति सूर्यम् RW.; देवत्तः प्रतिजूर्यः खि ५, १५,८. २८. °पक्तिका E,J. २९. एनी हरिक्णिका हरिः RW.; पिनष्टि परिका हविः खि. ३०. प्रदुद्रुदो C,D,E,R; प्रदुद्रुदो Sᵐ,P²; प्रदुद्रुदो Dc; प्रदुद्रुद RW.; प्र द्रुद्रुदो खि. ३१. मघो प्रति Dc; मघा प्रति RW.; मघायति खि.

शृङ्ग उत्पन्न[1] ॥ १३ ॥[2] मा त्वाभि[3] सखा नो विदन् ॥ १४ ॥[4]

वशायाः [5]पुत्रमा यन्ति[5] ॥ १५ ॥ [6]इरावेदुमयं दत[6] ॥ १६ ॥

[7]अथो इयन्नियन्निति[7] ॥ १७ ॥ अथो[8] इयन्निति[9] ॥ १८ ॥

अथो[10] [11]श्वा अस्थिरो[11] भवन्[12] ॥ १९ ॥[13] उयं[14] यकांशलोकका[15] ॥ २० ॥[16]

इति नवमेऽनुवाके चतुस्त्रिंशं सूक्तम् ॥

[17]आमिनोनिति भद्यते[17] ॥ १ ॥ [18]तस्य अनु[18] निभञ्जनम्[19] ॥ २ ॥[20]

वरुणो[21] याति वस्वभिः[22] ॥ ३ ॥ शतं वा भारती[23] शवः ॥ ४ ॥[24]

शतमाश्वा[25] हिरण्ययाः[26] । शतं रथ्या[27] हिरण्ययाः[28] ।
शतं कुथा[29] हिरण्ययाः[30] । शतं निष्का हिरण्ययाः ॥ ५ ॥

---

१. उत्पन्न R. २. श्रृङ्गे उत्पन्ने RW.; शृङ्ग उत्पत खि ५,१५,८. ३. त्वापि C,J. ४. मा त्वापि सखा नो विदत् RW.; मा त्वाति सखा नो वदत् खि ५,१५,९. ५. °मायंति D,E,R,P[2]; °मायंती Dc; °मायुति Sm; °मायंति Cs; °मायन् तम् खि. ६. °मयंदत E,Cs,P,P[2],J,Cp; इरां देवममदत् RW.; इरा चेन्द्रममन्दत खि. ७. अथो इयन्निति P,P[2]; °इयन्नियन्निति D,E; °इयन्नियन्निति Dc; अथो इयमियमिति RW.; °इयंन्नियन्निति खि. ८. अथो C,E; अथो Sm. ९. इयुन्निति D; इयन्निति E,Sm; इयन्निति Cs; इयमिति RW.; इयंन्निति खि ५,१५,१०. १०. अथो Sm. ११. श्वास्थिरो Dc,P,P[2]. १२. भव D. १३. अथोऽश्वा अस्थूरि नो भवन् RW.; अथो ज्यायस्तरो भुवत् खि. १४. उय Cs. १५. °शलोकका D,Cs,P[2]; °शलोकक Sm. १६. इयत्तिका शलाकुका RW.; इयं यका शलाकका खि. १७. अमि° P; °मिति मद्यते C; आ मिनोति वि भिद्यते RW.; आ मिनोति नि भज्यते खि. १८. तस्य आतु C; तस्य नु D; तस्य अत्नु R; तस्य अतु P,J. १९. निभम्जनम् Sm. २०. तस्य कर्तु निभञ्जनम् RW.; तस्या अनुनिभञ्जनम् खि ५,१५,११. २१. वरुणो Sm. २२. वसुभिः RW.; बभ्रुभिः खि. २३. भारती Dc. २४. शतं वायोरभीशवः RW.; शतं बभ्रोरभीशुभिः खि. २५. शतमश्वा RW. २६. हिरण्ययः P. २७. रथा RW. खि५,१५,१२. २८. हिरण्ययः D. २९. कुप्या Dc,Cs,P,P[2],RW.; कशा खि. ३०. हिरण्ययीः खि.

अहॣल कुश[1] वर्त्तक[2] ॥ ६ ॥[3]

[4]शफेन इव ओहते[4] ॥ ७ ॥

आय[5] वनेनती[6] जनी[7] ॥ ८ ॥[8]

वनिष्ठा[9] नाव गृह्यन्ति[10] ॥ ९ ॥[11]

इदं[12] मह्यं[13] मदूरिति[14] ॥१०॥[15]

ते वृक्षाः [16]सह तिष्ठति[16] ॥११॥

[17]पाक बलिः[17] ॥ १२ ॥

[18]शर्क बलिः[18] ॥ १३ ॥

[19]अश्वत्थ खदिरो धवः[19] ॥ १४ ॥

अरदुपरम[20] ॥ १५ ॥

शयो[21] हत इव ॥ १६ ॥

[22]व्याप पूरुषः[22] ॥ १७ ॥

[23]अदूहमित्यां पूषकम्[23] ॥ १८ ॥

[24]अत्यर्धर्च परस्वतः[24] ॥ १९ ॥

दौव[25] हस्तिनो दृती[26] ॥ २० ॥

इति नवमेऽनुवाके पञ्चत्रिंशं सूक्तम् ॥

---

१. कुश D,Sᵐ. २. वर्त्तक् C,E,P,P²; वर्त्तक् D. ३. अहॣल कुशावर्तक RW.; आहलकुः शवर्तकः खि ५,१५,१२. ४. शफे न पीव ओहते RW.; शफेन पीव ओहते खि. शांश्रौ १२,१८,१९. ५. आय Dc. ६. वनेनती Sᵐ; वनेनते J. ७. जनी Sᵐ; जनि Dc. ८. आयवनेन तेदुनी RW. शांश्रौ १२,१८,२०; आयवनेन तेजनी खि. ९. वसिष्ठा R. १०. गृह्यति C,Sᵐ; गृह्यति D,E,Cp; गृह्यते Dc. ११. वनिष्ठो नाव गृह्यते RW.; वनिष्ठुनोप नृत्यति खि ५,१५,१३. १२. इमं P,P². १३. मह्य D,Dc; मह्यी Cs. १४. मंदूरिति D,E,Cp; मदूरिति R,Sᵐ,Cs,J; मंदूरिति Dc. १५. इदं मह्यं मण्डूरिके RW.; इमं मह्यमदुरिति खि. १६. सह तिष्ठति C,D,E,R,Sᵐ, Dc,Cs; सह तिष्ठन्ति RW.; सह तिष्ठन्ति खि. १७. पाकबलिः C,RW.; पाकबलिः खि.; पाक बलिः D,E,Dc,P². १८. शाकबलिः C,RW.; शाकबलिः खि.; शार्कबलिः D; शर्क बलि E,Dc,P². १९. °धवः Dc; अश्वत्थः खदिरो धवः (धवः खि.) RW. खि ५,१५,१४. २०. अरदुपकम Cs; अरदुपर्णः RW.; अरदुः परमः खि. २१. शयो Dc; शये RW.; °शये । खि. २२. °व्याप° R; °व्यांसः° RW.; पापपूरुषः खि. २३. अदूहमि° Sᵐ; आदूहमिन्वापू° Cs; अदुहुमित्पीयूषम् RW.; अदोहामित्पीयूषकम् खि. २४. अत्यर्धर्च (°र्धं खि.) चु परस्वतः RW. खि ५,१५,१५. २५. दौव Sᵐ,P²; द्वौ वं RW. खि. २६. दृती C,Dc.

आदलाबुकमेकंकम्[1] ॥ १ ॥
अलाबुकं[2] निखातकम् ॥ २ ॥
[3]कर्करिको निखातकः[3] ॥ ३ ॥
[4]तद् वात उन्मथायति[4] ॥ ४ ॥
कुलायं[5] कृणवादिति[6] ॥ ५ ॥
[7]उग्रं वनिषदाततम्[7] ॥ ६ ॥
[8]न वनिषदनाततम्[8] ॥ ७ ॥
क [9]एषां कर्करी लिखत्[9] ॥ ८ ॥
क एषां [10]दुन्दुभिं हनत्[10] ॥ ९ ॥
[11]यदीयं हनत् कथं हनत्[11] ॥ १० ॥
[12]देवी हनत्[12] कुहनत्[13] ॥ ११ ॥
पर्यागारं[14] पुनःपुनः[15] ॥ १२ ॥
[16]त्रीण्युष्ट्रस्य नामानि[16] ॥ १३ ॥
[17]हिरण्य इत्येके अब्रवीत्[17] ॥ १४ ॥
द्वौ वा ये[18] शिशवः[19] ॥ १५ ॥[20]
नीलशिखण्डवाहनः[21] ॥ १६ ॥

इति नवमेऽनुवाके षट्त्रिंशं सूक्तम् ।

---

१. आदलाबुक° C,D,E,$S^m$,Cs; आदुलाबुक्° RW.; आदलाबुकमेकंकम् खि ५,१५,१५. २. अलाबुकं RW.; अलाबुकं खि. ३. कर्करिको निखातकः खि ५,१५,१६. ४. °वात° Dc; कद्वात° शांश्रौ १२,१८,१२; °उन्मथायति C,D,E,Cs,$P^2$; °उन्मथायंति R; °उन्मथायति $S^m$. ५. कुलाय D; कुलायन् E,R,J,Cp; कुलायत् Cs; कुलायं RW.; कुलायं खि. ६. क्षणत्रा° P; कृणशादिति R; कृणवादिति $S^m$; करवाँ इति खि. ७. उग्रं° C,D,E,R,Dc,Cs; उग्रं° $P^2$; °वनिषदाततं C,D,E,R,$S^m$,Dc,Cs; °वनिषदाततम् RW.; °वल्षदाततम् खि. ८. नवनि° D; न वल्षदनाततम् खि ५,१५,१७; °निषदनाततं $S^m$; °निषदाततं P. ९. एषां° R; एषां° Dc,Cs; °कर्करि° C,P,$P^1$,J; °कुर्करी° Dc,Cs; °कर्कुरिं लि° RW. खि.; °लिषन् Cs; °लिखत् R. १०. दुदुभिं° D,J; दुंदुमी° $S^m$,P,Cp; दुंदुभीं° $P^2$; दुन्दुभिं हनत् RW.; दुन्दुभिं हनत् खि. ११. यदियं हनत्° D; यदीं हनत्° R, आश्रौ ८,३,१७; यदीयं हनत्° $S^m$; यदीं हनत्° Dc,J; यदीं हनत्° Cs,P; यदी हनत्° ॥ १० ॥ $P^2$; °कुथं हनत् Cs; यदि हनत् कुथं हनत् RW.; यदीं हनत् कथं हनत् खि. १२. देवी हनत् $S^m$; दैलीं हनत् खि १५,१५,१८; लेलिं हनत् शांश्रौ १२,१८,१७. १३. कूहं हनत् R,C; कुहनत् $S^m$; कुथं हनत् P,$P^2$; कुह हनत् J; कुहं हनत् RW.; कथं हनत् खि. शांश्रौ. १४. पर्याकारं R, आश्रौ.; पर्याकारं खि. १५. पुनः-पुनः $S^m$. १६. त्रीण्युष्ट्रस्य नामानि $S^m$; त्रीण्युष्टस्य नामानि P,$P^1$; त्रीण्युष्ट्रस्य नामानि RW. १७. °ण्यत्येकें अब्रवीत् C,D,E,$S^m$,Dc,P,$P^2$,Cp; हिरण्यमित्येकमब्रवीत् RW. १८. य D,E,R,$S^m$,Dc,J,Cp; यं Cs; यः P,$P^2$. १९. शिशवे Dc. २०. द्वे वा यशुः शवः RW, २१. नीलं विशि° C,D,E,R,$S^m$,Cp; नीलशिखण्डो वा हनत् RW.

'विततौ किरणौ द्वौ' इति प्रवह्लिकाख्या ऋचः अर्धर्चशः शंसति। तद् उक्तं वैताने— "'विततौ किरणौ द्वौ' इति प्रवह्लिकाः" ( वैताश्रौ ३२,२१ ) इति।

वितंतौ [1]किरणौ द्वौ तावा पिनष्टि पूरुषः।[1]
[2]न वै कुमारि[2] तत् तथा यथा कुमारि मन्यसे ॥ १ ॥
[3]मातुष्टे किरणौ द्वौ निवृत्तः पुरुषानृते।[3] न वै० ॥ २ ॥
[4]निगृह्य कर्णकौ द्वौ निरायच्छसि मध्यमे।[4] न वै० ॥ ३ ॥
[5]उत्तानायै शयानायै तिष्ठन्ती वाव गूहसि।[5] न वै० ॥ ४ ॥
[6]श्लक्ष्णायां श्लक्ष्णिकायां श्लक्ष्णमेवाव गूहसि।[6] न वै० ॥ ५ ॥
[7]अवश्लक्ष्णमिव भ्रंशदन्तर्लोममति ह्रदे।[7]
न वै कुमारि तत् तथा यथा कुमारि मन्यसे ॥ ६ ॥

इति नवमेऽनुवाके सप्तत्रिंशं सूक्तम्।

'इहेत्थ प्रागपागुदगधराक्' इति प्रतिराधाख्या ऋचः अर्धर्चशः शंसति। न संतनोति। तद् उक्तं वैताने— "'इहेत्थ प्रागपागुदगधराग्' इति प्रतिराधान्। न संतनोति" (वैताश्रौ ३२,२२ ) इति

---

१. किरणौ द्वौ तावा पिनष्टि पूरुषः। दुन्दुभिमाहननाभ्याम् ॥ RW.; किरणौ द्वौ तावा° खि ५,१६,१. २. न वै कुमारि RW. एवमग्रेऽपि; °कुमारि Cs. ३. मातुष्टे° Cs; मातुष्टे° RW.; °किरणौ° D,S[m],Cs; °किरण° P; °किरणौ° RW. खि.; °निवृत्तः पुरुषादृतिः। कोशबिले ॥ RW.; °नृते D; °निवर्तः पुरुषादृते खि ५,१६,२; पुरुषादृतिः शांश्रौ १२,२२,२. ४. निगृह्य° Dc; °कर्णकौ° C; °कर्णकौ° Dc; निगृह्य कर्णकौ द्वौ निरायच्छति मध्यमे। रज्जुनि ग्रन्थ्येदानम् ॥ RW.; निगृह्य कर्णकौ द्वौ निरायच्छसि मध्यमम्। खि ५,१६,३. ५. उत्तानायै° C; °तिष्ठते° C,D,E,S[m],Cp; °तिष्ठति° P[2]; °तिष्ठन्ति वमूहसि P; उत्तानायां शयानायां तिष्ठन्तमव गूहति। उपानहि पादम् ॥ RW.; °तिष्ठन्नेवाव गूहसि खि ५,१६,४ शांश्रौ १२,२२,४. ६. °श्लक्ष्णमेवाव° R; श्लक्ष्णायां श्लक्ष्णिकायां श्लक्ष्णमेवाव गूहति। उत्तराञ्जनीमाञ्जन्याम् ॥ RW.; श्लक्ष्णायां श्लक्ष्णिकायां श्लक्ष्णमेवाव गूहसि खि ५,१६,५. ७. °दन्तर्लोमतिर्ह्रदे E; °मंतर्लो° R; °दतर्लो° Dc; °दतर्लोमाति ह्रदे P,P[2]; अव श्लक्ष्णामिव भ्रंशदन्तर्लोमवति ह्रदे। उत्तराञ्जनीं वर्त्मन्याम् ॥ RW.; अव श्लक्ष्णमवभ्रंशदन्तर्लोमवति° खि ५,१६,६; °लोमवति° शांश्रौ १२, २२,६.

इहेत्थ [1]प्रागपागुदगधराग् अरालागुदभर्त्सथ[2] ॥ १ ॥[3]

इहेत्थ[4] प्रागपागुदगधराग् वत्साः पुरुषन्त[5] आसते[6] ॥ २ ॥

इहेत्थ[4] प्रागपागुदगधराक् स्थालीपाको वि लीयते[7] ॥ ३ ॥

इहेत्थ[4] प्रागपागुदगधराक् स वै [8]पृथु लीयते[8] ॥ ४ ॥[9]

इहेत्थ[4] प्रागपागुदगधराग् आष्टे[10] लाहणि[11] लीशाथी[12] ॥ ५ ॥[13]

इहेत्थ[4] [14]प्रागपागुदगधराग् अश्लिलली पुच्छिलीयते[14] ॥ ६ ॥[15]

इति नवमेऽनुवाके अष्टत्रिंशं सूक्तम् ।

'भुगित्यभिगतः' इत्याजिज्ञासेन्याख्यास्तिस्र ऋचः शंसति । तद् उक्तं वैताने — "'भुगित्यभिगतः' इत्याजिज्ञासेन्यास्तिस्रः" ( वैताश्रौ ३२,२३ ) इति ।

'वीमे देवा अक्रंसत' इत्यतीवादाख्या ऋचः अर्धर्चशः शंसति । तद् उक्तं वैताने — "'वीमे देवा अक्रंसत' इत्यतीवादम्" ( वैताश्रौ ३२,२६ ) इति ।

[16]भुगित्यभिगतः शलित्यपक्रान्तः[17] फलित्यभिष्ठितः[18] ।
दुन्दुभिमाहननाभ्यां जरितरोथामो[19] दैव ॥ १ ॥

---

१. °गपागु° C,D,E,R,Sm,Cs. २. °भर्त्सत E, शांश्रौ १२,२३,१; °भर्त्सथः P,P². ३. इहेत्था प्रागपागुदगधरागरालां उदभर्त्सत खि ५,१७,१; इहेत्था प्रागपागुदगधरागासंज्ञा उदभिर्यथा । अलाबूनि ॥ RW. ४. इहेत्था RW. खि ५,१७,२-४. ५. पुरुषन्तु Sm, Dc; पुरुषन्त RW. खि. शांश्रौ. ६. °ते । पृषातकानि ॥ RW. ७. °ते । अश्वत्थपलाशम् RW. ८. पृथु लीयते C,D,E,R,Sm,Cs,P². ९. °सा वै स्पृष्टा वि लीयते । विप्रुट् RW. १०. आष्टि C; आष्टे E,Sm,Dc; आष्ट्यें Cs; आष्टृ P,P²; अष्टे Cp. ११. वाहणि C; लोहणि Dc; लाहणी Cs,J. १२. लीशंथी C,D,E,Dc; लीशंथे Sm. १३. उष्णे लोहे न लीप्सेथाः । चमसः ॥ RW. १४. °गपागु° C,D,E,R,Sm,Cs; °गाश्लिक्ष्णलीपुश्लिषते C; °गशली पुछि लीषते Cs; °गाक्लिछली लोपुछिल लीशते E; °गाश्लिली पुछिं लीषते R,Sm; °गांश्लिली पुछिल लीषते Dc; °गश्लीलि पुक्षिण लीषते P,P²; °गश्लिली पुश्लीषते J; °गश्लिल लीषते Cp; °धराक् च्छिल्ललीषु च्छिलीषते शांश्रौ १२,२३,४. १५. इहेत्था प्रागपागुदगधरागशिश्लिक्षुं शिश्लिक्षते । पिपीलकावटः ॥ RW.; इहेत्था प्रागपागुदगधराक् सिलीपुच्छो वि लीयते खि ५,१७,४. १६. भुगित्यु° Sm. १७. °क्रांतः C; °क्रांतः Sm; शरित्यभिष्ठितः खि ५,१८,१. १८. फलित्यपक्रान्तः खि. १९. जुरितरोथामो D; जुरितरोथामो E; जरितरोथामो Sm; जरितुरोथामो P².

कोशबिले[1] रजनि [2]ग्रन्थेर्धानमुपानहिं[2] पादम्[3] ।
उत्तमां[4] जनिमां[5] [6]जन्यानुत्तमां[6] [7]जनीन् वर्त्मन्यात्[7] ॥ २ ॥

[8]अलाबूनि पृषातकान्यश्वत्थपलाशम्[8] ।
पिपीलिकावटश्वसो[9] विद्युत्स्वापर्णशफो[10] गोशफो[11] जरितरोथामो[12] दैव[13] ॥३॥

वीमे[14] देवा अक्रंसताध्वर्यो[15] क्षिप्रं[16] प्रचर[17] ।
सुसत्यमिद्[18] गवामस्यसि प्रखुदसि[19] ॥ ४ ॥[20]

इह[21] इत्येतामर्धर्चशः प्रणवत्यनुते[22] ।

[23]पत्नी यद्दृश्यते[24] पत्नी[25] यक्ष्यमाणा[26] जरितरोथामो[27] दैव ।
होता[28] विष्टीमेन[29] जरितरोथामो[30] दैव ॥ ५ ॥

---

१. कोश° C,D. २. ग्रंथे° Sm; °नहि Dc,P[1]; °र्धानो° आश्री ८,३,१९. ३. पादं Dc. ४. उत्तमा Cs; उत्तरां आश्री. ५. जनिमा C,Cs; जनिनां P,P[2]; जनी° आश्री. ६. जन्या° Dc; °उत्तमां C,P[2]; जन्यामुत्तरां आश्री. ७. जनीं वर्तन्यां आश्री. ८. अलाबुनि° D; °श्वत्थपलाशं C; °श्वत्थपलाशवं D. ९. °वटश्वसो C; °वटश्वसो E; °वटःश्वा आश्री ८,३,२३. १०. °त्स्वापर्णे° C,E,Sm,Cs,P[2]; °शफो C. ११. गोशफो D; °शफो Sm; °शफो Cs,P[2]; नास्ति C. १२. जरितरोथामो C; जरितरोथामो Sm; जरितरोथामो Cs; जरितरोथामो P[2]; °रोथामो E; पिपी° इत्यारभ्य °थामो इत्यन्तं स्वाराघाङ्कयति R; अलाबू° इत्यारभ्य °थामो इत्यन्तं स्वराघाङ्कयति Dc. १३. दैव इति Dc. १४. वीं१मे C,Dc; वी३मे E; वीमे P,P[2]. १५. °ध्वर्यो: C,D,E,R,P,P[2],Cp; °ध्वर्यो: Dc. १६. क्षिप्र Sm,Cs. १७. प्रचरः Dc. १८. सुसत्य° C; सुशस्तिरिद् खि ५,१९,१. १९. प्र खुदसि D; प्र सूदसि Dc; प्र ष्टुदसि Cs; प्र षुदसि P,P[2]; पृथुदसि J; प्रक्षिदसो महत् खि. २०. सुगित्यभिगतः । श्वा ॥ १ ॥ शलित्यपक्रान्तः । पूर्णशदः ॥ २ ॥ फलित्युभिहितः । गोशफः ॥ ३ ॥ वी३मे देवा अक्रंसताध्वर्यो क्षिप्रं प्र चर । सुषदुमिद्गवामस्ति प्र खुद ॥ ४ ॥ ··· ॥ ५ ॥ RW. २१. इ नास्ति D,R,Cs,P,P[2]; इह नास्ति Sm,Cp. २२. प्रणवंत्य° D,R,Cs,P,P[2]; कतिचिदक्षराणि अनियमतः सस्वराणि केषुचिद् मूको. २३. इतः प्रभृति °रोथामो दैव इत्यन्तं स्वराघाङ्कयति Dc; पत्नी° Cs. २४. पत्नी दृश्यते P; यद्वृष्स्यते P[2]. २५. पत्नी Cs. २६. यक्षमाणा E,Sm,Cp; यक्ष्यमाणा P[2]; यीयप्स्यते आश्री ८,३,२४; यीयप्स्यमाना शाश्री १२,२३,५. २७. जरितरोथामो C,E,R; जरितरोथामो Dc; जरितरोथामो Cs; जरितरोथामो Sm. २८. होता D,Sm,Dc,P. २९. विष्टमेन C; विष्ट्वीमेन D; विष्टीमेन E; विष्टिमेन Dc,P,P[2]. ३०. जरितरोथामो R,Sm; जरितरोथामो Cs; जरितरोथामो Dc.

[1]आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन्[1] ।
[2]तां ह जरितः[2] [3]प्रत्यायंस्तामु ह[3] जरितः प्रत्यायन् ॥ ६ ॥

[4]तां ह[4] जरितर्नः[5] [6]प्रत्यगृभ्णंस्तामु ह[6] [7]जरितर्नः प्रत्यगृभ्णः[7] ।
[8]अहानेतरसं न वि चेतनानि यज्ञानेतरसं न पुरोगवामः[8] ॥ ७ ॥

उत श्वेत[9] [10]आशुपत्वा उतो[10] पद्याभिर्यविष्ठः[11] ।
[12]उतेमाशु मानं पिपर्ति[12] ॥ ८ ॥

आदित्या[13] रुद्रा [14]वसवस्त्वेनु त[14] इदं राधः प्रति गृभ्णीह्यङ्गिरः[15] ।
इदं राधो[16] विभु[17] [18]प्रभु इदं[18] राधो[19] बृहत्[20] पृथु[21] ॥ ९ ॥[22]

---

१. आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन् R; °त्या हरितरंगिरोभ्यो दक्षिणा° C; °ह जरितरंगिरोभ्यो° D,E,$S^m$,Dc; °ह जरितरंगिरोभ्यो दक्षिणामुनयंन् Cs; आदित्या ह° °दक्षिणामनयन् RW.; °दक्षिण° P; °रोभ्योऽश्वं द° शांश्रौ १२,१९,१. २. तं ह° Dc,J; सां ह नरितः P,$P^2$; °जरितर्न RW. खि ५,२०,१ शांश्रौ. ऐब्रा ६,३५. ३. प्रत्येयं° P; प्रात्यायं° $P^2$; °स्तामूह R; °स्तामुहु $S^m$; °स्तामु ह Dc,RW.; °स्तामूह Cs. ४. तामुह ह Dc; ता ह Cs. ५. जरितर्न RW. खि ५,२०,२ शांश्रौ. ऐब्रा. ६. °स्तामु ह C,Dc,RW.; °स्तामूह R; °स्तामूह Cs. ७. जरितः प्र° J; जरितः प्रत्यगृभ्णन् RW. खि. शांश्रौ. ऐब्रा. ८. आहाने° $S^m$; अहानेतरसन्न विचे° Dc; °यज्ञा नेतर° $S^m$; °यज्ञानित° P,$P^2$, °न पुरोग° Dc; अहा नेत सन्नविचेतनानि जज्ञा नेत सन्नपुरोगत्रासः RW. खि. ऐब्रा.; अहादेत (?) सन्नविचेतनानि यज्ञादेत सन्नपुरोगवासः शांश्रौ १२,१९,२. ९. श्वेता R,J; श्वेत Dc,RW.; स्वेता Cs. १०. आशु पत्वा° Dc; आशु पत्वा° RW; आशुपत्वोत शांश्रौ १२,१९,४; °उत D,E,R,$S^m$,Dc,Cs,P,$P^2$,J,Cp. ११. पद्याभि° R,$S^m$; पंद्याभि° Cs; °र्यविष्ठाः C; °यविष्ठः $S^m$; °जविष्ठः RW. खि ५,२०,३ ऐब्रा. १२. °माशुमानं पिपर्ति R; °माशु° RW.; उतो आशु मानं बिभर्ति शांश्रौ.; °पिपर्ती F; °पिपर्त $P^2$. १३. आदित्या R,$S^m$; आदित्या RW. १४. वसवस्त्वेळ (°क ऐब्रा.) त (°ते खि. ऐब्रा.) RW. ऐब्रा. खि ५,२०,४. शांश्रौ १२,१९,२; °स्वे नुत्त D,E,Dc,Cp; °स्तेनुत R,$S^m$. १५. °ह्यङ्गिरः C,D,E,R,$S^m$,Dc,$P^2$; °ह्यङ्गिरः खि. १६. राधो E. १७. विभु E,R,$S^m$. १८. प्रभुरिदं C,D,$S^m$,Cp; प्रभु° RW. १९. राधो E. २०. बृहत् C,E,R,Dc,$P^2$. २१. पृथुः C,$S^m$,Dc,P,$P^2$,J.
२२. इदं राधो बृहत्पृथु देवा ददत्वा (ददतु यद् शांश्रौ.) वरम् खि. शांश्रौ. ऐब्रा.

[1]देवा दद॒त्वासु॑रं॒ तद् वो॑ अस्तु सुचे॑तनम्[1] ।
[2]युष्माँ॑ अस्तु दिवे॑दिवे प्र॒त्येव॑ गृभायत[2] ॥ १० ॥[3]

[4]सप्तदश पदान्यष्टादशभिर्व्याख्याता[4] [5]प्रतिगरे विकारः[5] । [6]ॐ ह जरितस्तथा ह[6] जरितरिति [7]विपर्यासं जरितुं मतिष्वेवं[7] [8]प्रतिगरामके सर्वांश्विति[8] पाणिनास्त्व- मिन्द्र[9] शर्मरिणेति[10] तिस्रो भूतेच्छदो[11] अर्धर्चशः ॥[12]

[13]त्वमि॑न्द्र[13] श॒र्मरि॑णा[14] ह॒व्यं[15] पारा॑वतेभ्यः ।
विप्रा॑य स्तुव॒ते[16] [17]व॑सु॒वनिं॑ दुरश्रव॒से व॑ह[17] ॥ ११ ॥
त्वमि॑न्द्र क॒पोता॑य[18] च्छिन्नप॒क्षाय॒[19] वञ्च॑ते[20] ।
श्यामा॒कं[21] प॒क्वं[22] [23]पीलु॑ च॒[23] वार॑स्मा॒[24] अकृ॑णोर्ब॒हुः[25] ॥ १२ ॥

---

१. द्रेवा° Dc,RW.; °दुत्वा° Cs; °सुचेतनं E; सुचेंतनं R; °ददुत्वा वरं तद्वो अस्तु सुचे- तनम् RW. २. युष्मे° E,S^m; युष्मं° Cs,R; युष्माँ° D; °अस्तु दिवेदिवे प्रत्येव गृभायतेति R,Dc; युष्मे अस्तु दिवेदिवे प्रत्येव गृभायत RW.; °दिवेदिवे प्रत्येव° S^m; °दिवेदिवे प्रत्येवं° C,Cs; °दिवेदिवे प्रत्यंव° E; °गृभायतेति C. ३. एतदनन्तरं खिल इति लिखति D; तद्वो अस्तु सुचेतनं युष्मे अस्तु दिवे दिवे । प्रत्येव गृभायत खि ५,२०,५ ऐब्रा.; तद्वो अस्तु सजोषणं युष्मे अस्तु दिवेदिवे । प्रत्येव गृभायत शांश्रौ १२,१९,३. ४. सप्तपदान्यष्टाभि° J; सप्तदश- पादान्यष्टाभि° C,P,P²; सप्तदशपादा° R; °गिरे वि° R; °गिरवि° Cs; °गिरेति वि° J. ६. ॐ हि जरितस्त्वथाह D; ॐ ह जरितस्तमथाह Cs. ७. विपर्यासजरितम° Dc; °मति- ष्ठेवं D. ८. प्रतिवारा ॥ कस° D; प्रतिगराममेके° Cs; प्रतिगिरामेके° J; प्रतिगिरामके° P,P²; °सर्वांश्रिवि D,Dc; सर्वांश्विस्ति J. ९. प्राणीना° Cs. १०. शार्मणेति D; शर्मक्रणेति Dc,P. ११. भुतेछंदो D,Cs,P,P²; भूतेछदे Dc; भूतेश्छंदो J. १२. नास्ति E,S^m, Cp. १३. त्वमिन्द्र RW. खि ५,२१,१. १४. शार्म क्रणा Dc; शार्मक्रणा P,P²; शर्मं रिणा RW. शांश्रौ १२,१६,४; शर्मन्नरिणा खि ५,२१,१. १५. हुव्य Cs; हव्युः RW. १६. स्तुवते S^m. १७. वसुवनि दुर श्रवसे वहं S^m; वसु विदूरः श्रवसे वहः Cs; °दूरश्रवसे° R; वसु विदुरश्रवसो महः J; वसुवनिं दुरश्रवसे महः Dc; वसु श्रुतुरिच्छवसे वहः खि.; वसु नि दूरश्रवसे वहः शांश्रौ. १८. कुपोताय C,D,E,S^m; कुपोताय R; कपोतायं Cs; कपोताय खि ५,२१,२. १९. छिन्नपुक्षायं C,D,E,R; छिन्नपुक्षायं S^m,Dc,P²; छिन्नपक्षाय RW.; च्छिन्नपक्षाय खि. २०. वञ्चसे D,E; वञ्चते C,R,S^m,Dc,P². २१. शामाकं C,D, Cs,P,P²,J; श्यामाकं RW. खि. २२. पुक Cs. २३. पीलुं° C; पीलुं° D,R,S^m,Cs, P,P²,J,Cp; पीलु° RW.; विरुज खि. २४. वारस्मा RW. २५. अकृणोर्बहु RW.; अकृणोर्बहु खि. शांश्रौ १२,१६,५.

अरंगरो[1] वावदीति[2] त्रेधा बद्धो[3] वरत्रया[4] ।
इरामह[5] [6]प्रशंसत्यनिरामपं सेधति[6] ॥ १३ ॥

इति नवमेऽनुवाके एकोनचत्वारिंशं सूक्तम् ।

[7]'यदस्याः' इति[7] षोडशे[8] आहनस्या [9]वृषाकपिला वैशिषमुत्तमेन[9] पादेन[10] प्रणौति ।

'यदस्या अंहुभेद्याः' इत्याहनस्याख्याः षोडशर्चः वृषाकपिशस्त्रवच्छंसति । तद् उक्तं वैताने — "'यदस्या अंहुभेद्याः' इत्याहनस्या वृषाकपिवत्" ( वैताश्रौ ३२,३१ ) इति ।

[11]यदस्या अंहुभेद्याः[11] कृधु[12] स्थूलमुपातसत्[13] ।
[14]मुष्काविदस्या एजतो गोशफे शकुलाविव[14] ॥ १ ॥
यदा स्थूलेन[15] पससाणौ[16] मुष्का उपावधीत्[17] ।
[18]विष्वञ्चा वस्या वर्धतः[18] सिकतास्वेव[19] गर्दभौ[20] ॥ २ ॥

---

१. अरंगिरो R,Cs,J; आरङ्गरों खि ५,२१,३. २. वावदिति R,Cs,Cp. ३. बद्धो Sm. ४. वरत्रया R; वरत्रया Sm; वरत्रिया Cs; वरत्रय P; वरंत्रया P²; वरत्रया J; वरत्रयीं C; वरत्रया D,E; वरत्यंयाः खि. ५. इरामुह R,Cs; इरामह RW.; ईरामु ह खि. शांश्रौ १२,१६,२. ६. प्रशंसत्य° D,E,Dc; °मपसैधति E; °मपसेधति Sm; °मपसेधति Dc.; °मपं सेधत खि. ७. यदद्यस्येति Sm. ८. °शः R,Cs; °डशर्चः Sm,Cp. ९. °स्याद्वृषाकयिवद्वैशि° Dc; °स्याद्वृषाकपिलावैशि° J,P²; °स्याद्वृषाकपिदैशिमु° Cp; °स्यावृषाकपिलादैशि° Sm. १०. पदेन E,Sm,Cs,J,Cp. ११. यदस्या° C,D,E,R, Sm,Dc; °अहुंभेद्याः खि ५,२२,१. १२. कृधुः C; पृथु खि. १३. स्थूलं° Dc; स्थूरं° खि. १४. मुष्को ३ ओ ओ ओ ३ ओ ओ ओ ओ ३ ओ ओ ओ ओ ३ विदस्या एजतो ३ ओ ओ गों° C; मुष्काविप ३ ओ ओ ओ ३ ओ ओ ओ ३ ओ ओ ओ ओ ३ ओ ओ विदस्या एजतो गोशफे शकुला° Sm; मुष्को ३ ओ ओ ३ ओ ३ ओ ओ ओ ३ ओ ओ ओ ३ विदस्या एजतो ३ ओ ओ ३ गों° Dc; मुष्को ३ ओ ओ ओ ३ ओ ओ ओ ३ ओ ओ ओ ३ ओ विदस्या एजतो ३ ओ ओ गो° P; मुष्को ३ ओ ओ ओ ३ ओ ओ ओ ३ ओ ओ ओ ३ ओ विदस्या एजतो ३ ओ ओ गोशफे° P²; मुष्काविदस्या° D,E,R; मुष्का इदस्या° खि; °एजतो° RW. खि. मा २३,२८; °गोशफे° P²,RW.; °गोशफे° खि. १५. स्थूणेन Dc,P,P²,J; स्थूरेण खि५,२२,२. १६. पसःसाणौ C; पससाणौ Cs; पससाणौ RW.; पससा अणू खि. १७. उपात्रधीत् E; उपावधीत् RW. खि. १८. विष्वंचावस्या° E; विष्कंचावस्या वर्धतः Dc; विष्वञ्चावस्या वर्धतः RW.; विष्वञ्चावस्यार्दतः खि.; °वर्धन Cs; °वर्धनः J. १९. सिकताश्वेव R; सिकताश्वेव Cs,J; सिकतास्वेव P²; सिकतास्विव RW. खि. शांश्रौ १२,२४,३. २०. गर्दभौ P²; गर्दभौ RW.; गर्दभौ खि.

यदल्पिकास्वल्पिका[1] कर्कन्धूकेवपद्यते[2] ।
वासन्तिकमिव[3] तेजनं यन्त्यवाताय[4] वित्पति ॥ ३ ॥[5]

यद् देवासो ललामगुं[6] प्रविष्टीमिनमाविषुः[7] ।
सकुला[8] देदिश्यते[9] [10]नारी सत्यस्याक्षिभुवो[10] यथा[11] ॥ ४ ॥

महानग्न्यतृप्नद्वि[12] मोक्रदद्स्थानासरन्[13] ।
शक्तिकानना स्वचमशकं[14] सक्तु[15] पद्यम ॥ ५ ॥[16]

महानग्न्युलूखलमतिक्रामन्त्यब्रवीत्[17] ।
[18]यथा तव वनस्पते निरघ्नन्ति तथैवेति[18] ॥ ६ ॥

---

१. यदल्पिका स्वल्पिका RW.; यदल्पिका स्वल्पिका खि ५,२२,३; °स्वल्पिका E. २. कर्कन्धूकेव पद्यते RW.; °षद्यते D,E,R,Dc,Cs,J; कर्कन्धुकेव पध्यते खि. ३. वासंतिक° R; वासंतिक° Dc; वसंतिक° Cs. ४. यत्य° Cs; °वानाय Cs,Cp. ५. वासन्तिकमिव तेजनं भंस आतत्यं विद्यते RW.; वासन्तिकमिव तेजनं यन्त्यमाना वि नम्यते खि. ६. ललामगुं C; ललामुगं D; ललामगुं E,R; ललामगुं Sm,RW. मा २३,२९; ललामगुं P,P¹; ललाङ्गुं खि ५,२२,४. ७. °मिनमाविषुः P¹,RW. खि. मा.; °मारिषुः Cs; °मादिषुः Sm. ८. सकुला C,D; सकुला E. सकुला Cs; सुकुला P¹; सुकप्ना RW. खि. मा. शाश्री १२,२४,१. ९. देदृश्यते E,R,Sm,P,J; देदश्यते Cs; देदृश्यते P¹; ते दृश्यते खि. १०. °क्षिभुवो E; °क्षिभुवो Cs; नारी सत्यस्याक्षिभगो खि. ११. यथा Cs, खि. १२. महानग्न्यै° E; महान अतृ° Cp; °तृप्नद्वि D; °तृप्नद्वि E; °तृप्नद्वि R; °तृप्नद्वि Sm; तृप्नद्वि Dc; तृप्नद्वि P; तृष्टद्वि P¹; तृप्नद्वि J. १३. मो क्रंदु° Sm; °नासन् D; °ना आसरन् P,P¹. १४. स्वच° Sm,J; स्वयु° Dc १५. शक्तु D. १६. महानग्न्यतृप्नद्विमोक्रदद्स्थानासरन् । शाक्तिका नाना स्वयमशक सक्तु पद्यम ॥ Cs; महानग्न्यपद्रिमुक्तः कन्दुवस्थो नासरन् । शक्ति कनीना खुद मध्यमं सक्थ्युपतम् ॥ RW.; महानग्न्यस्ते हि सोऽक्रन्दद्स्थामासदन् । शक्तुकामन्तो मुत्र मशकं सक्थ्युपतम् ॥ खि ५,२२,६. १७. °नग्न्युलूखल° C; °नग्न्युलूखल° RW.; °नग्न्युलूखलमति क्रामन्त्यब्रवीत् खि ५,२२,७. १८. यथा तव° C,D,E,R,Sm,Dc,Cs; °वनस्पते निघ्नन्ति तथैवेति RW.; यथैव ते वनस्पतेऽपि घ्नन्ति तथैव मे खि.; °नि घ्नन्ति तथा मम शाश्री १२,२४,७.

महानग्न्युपं[१] ब्रूते भ्रष्टोथाप्यंभूभुवः[२] ।
[३]यथैव ते वनस्पते पिप्पति तथैवेति[३] ॥ ७ ॥

महानग्न्युपं[४] ब्रूते भ्रष्टोथाप्यंभूभुवः[५] ।
[६]यथा वयो विदाह्यं स्वर्गे नमवदंह्यते[६] ॥ ८ ॥

[७]महानग्न्युपं ब्रूते स्वसावेशितं पसः[७] ।
[८]इत्थं फलस्य वृक्षस्य[८] [९]शूर्पे शूर्पं भजेमहि[९] ॥ ९ ॥

महानग्नी कृकवाकं[१०] [११]शम्यया परि धावति[११] ।
अयं[१२] न [१३]विद्म यो[१३] मृगः शीर्ष्णा[१४] [१५]हरति धाणिकाम्[१५] ॥ १० ॥

महानग्नी महानग्नं धावन्तमनु धावति ।
इमास्तदस्य[१६] गा रक्ष[१७] [१८]यभ मामद्ध्यौदनम्[१८] ॥ ११ ॥

---

१. महानग्न्युऽप D,R,Dc,Cs,$P^2$; महानग्न्यूप E. २. भ्रष्टो° C,D,E,Dc; भ्रष्टो प्याप्य° P; भ्रष्टोप्याप्यं° $P^2$; °भुभुवः C,D,R,Cs,J; °बुभुवः E,$S^m$,Cp; °बूभुवः RW. ३. यथैं वव वनस्पते° D,J; यथैवनस्पते° $S^m$; यथैव तें नस्पते° P,$P^2$; यथैव ते वनस्पते° C,E,R, Dc; यथैव तें वनस्पते° RW.; °पिर्ष्वति° R,Cs; °पिषन्ति तथैवेति RW. ४. महानग्न्युऽप D,E,R,Dc,Cs,$P^2$. ५. भ्रष्टो° C,D,E,Dc,$P^2$; °भुभुवः C,D,R,Cs,J; °बुभुवः E,$S^m$, Cp; °बूभुवः RW. ६. यथा द्रावो विदह्यत्यङ्गानि ममं दह्यन्ते RW.; यथा वह्ो° Cs; °विदाह्यः° D,E,Dc,Cp; °स्वर्गेण मव दह्यते E,$S^m$,J,Cp; °स्वर्गेनंमदह्यते Dc; °नमवदंह्यते C,R; °नमवर्दुह्यते D. ७. °नग्न्युपब्रू° D; °नग्न्युऽपब्रू° E,R,Dc,Cs,$P^2$; °स्वस्त्यावेंशितं RW. शाश्रौ १२,२४,६; °वेसितं° C; °विशितं° D; °ऽश्वस्या वेशितं खि ५,२२,५. ८. ईदं- कंकस्य° खि.; °फलस्य वृक्षस्य RW.; °वृक्षस्य $P^2$. ९. शूर्पंशूर्पं भजेमहि RW. शाश्रौ.; शूर्पं शूर्पं खि. १०. कृक्कवाकं D,Dc; कृकवाक Cs; क्रकुवाकं $P^2$; कृकुवाकुं RW.; कृक्कवाकुं खि ५,२२,८ शाश्रौ १२,२४,५. ११. शम्यया परिधावति खि. १२. वयं RW. शाश्रौ.; इदं खि. १३. विद्म यो RW.; विद्म तेंजनं खि. १४. शीर्ष्णां P. १५. हरति° RW.; भवति धानिका खि. १६. इमास्तु तस्य शाश्रौ १२,२४,४. १७. रक्ष $S^m$,Dc, Cs,RW; दक्ष $P^2$. १८. यच° C; यज° $P^2$; यनमामध्यैदनं P; यभमामध्यौ- दनम् Cs; यभ मामद्ध्योदनम् RW.; °द्ध्योदनम् खि ५,२२,९.

सुदेवस्त्वा[1] महानग्नीर्बबाधते[2] महतः साधु खोदनम्[3] । कुसं[4] पीवरो नवत् ।१२।[5]

वशा दुग्धामिमाङ्गुरिं[6] प्रसृजतोग्रतं[7] परे ।
महान्[8] वै[9] भद्रो[10] यभ मामद्ध्यौदनम्[11] ॥ १३ ॥[12]

विदेवस्त्वा[13] महानग्नीर्विबाधते[14] महतः साधु खोदनम् ।
[15]कुमरिका पिङ्गलिका[15] कार्द भस्मा कु धावति ॥ १४ ॥[16]

महान् [17]वै भद्रो बिल्वो[17] महान्[18] [19]भद्र उदुम्बरः[19] ।
[20]महाँ अभिक्त बाधते महतः साधु खोदनम्[20] ॥ १५ ॥

यः कुमारी पिङ्गलिका वसन्तं[21] पीवरी लभेत् ।
[22]तैलकुण्डमिमाङ्गुष्ठं[22] रोदन्तं[23] शुदमुद्धरेत्[24] ॥ १६ ॥[25]

इति नवमेऽनुवाके चत्वारिंशं सूक्तम् ।

## ॥ इति कुन्तापसूक्तानि ॥

---

१. सुदेव° Dc. २. महानग्नी° Sm. ३. खोदनं D. ४. कुसं D,E,Dc; कुसं Sm,Cs. ५. सुदेवस्त्वा महानग्नि वि बाधते महतः साधु खोदनम् । कुशितं पीवरी नशायभ माम° RW. ६. दुग्धमि° C; दुग्धामिं° R,Sm,Cs; दुग्ध्यमिंवाङ्गुरिः Dc; °गुरि P,P[1]. ७. प्रसृजतो° E; °ग्रतां P,P[2]. ८. महान् Dc. ९. वै D,E,R,Sm,Dc, Cs. १०. भद्रो बिल्वो D; भद्रो E; भद्रो R,Dc. ११. °मध्योदनं C; °मध्यौदनं Cs. १२. वशा दुग्धा विनाङ्गुरिं प्र सृजते वर्नकुरम् । महान् वै भद्रो बिल्वो यभ माम° RW. १३. विदेवरस्त्वा E; विदेवस्त्वा Dc. १४. °नग्नी वि बा° P,P[2]; °र्वि बाधते C. १५. कुमारिका पिंगलिका Dc. १६. विदेवस्त्वा महानग्नि वि बाधते महतः साधु खोदनम् । कुमारिका पिङ्गलिका कार्यं कृत्वा प्र धावति ॥ RW. १७. वै भद्रो बिल्वो C,E,R,Sm, Dc; वै भद्रो बिल्वो D; वै भद्रो बिल्वों P[2]; वैं भद्रों बिल्वों खि ५,२२,१०. १८. महान् Dc. १९. भद्र उदुम्बरः RW.; पर्क उदु° खि.; °उदुम्बरः Cs. २०. महाँ अभितो बाधते महतः साधु खोदनम्। RW.; महाँ अभिक्षु बाधते महतः साधु खोदनम् खि. शांश्रौ १२,२४,८; °खोदनम् D. २१. वसंतं C; वसंतं D,E,P[2]. २२. तैलकुण्ड° Dc; °मांगुष्ठ R; °मांगुष्ठं Cs. २३. रोदंतं C,D; रोदंत R; रोदंतं Cs; रोदंतं P[2]. २४. शुदमुद्धरेत् D; शुदमुद्धरेत Cs; शुनमुद्धरेत् Cp. २५. यं कुमारी पिङ्गलिका कुशितं पीवरी लभेत् । तैलकुण्डादिवाङ्गुष्ठं रदन्तं शुदमुद्धरेत् ॥ RW.; कुन्तापसूक्तान्ते खिल सोतु इत्यधिकम् D.

**सोमयागे** 'दधिक्राव्णः' ( अ २०,१३७,३ ) **इत्यस्या ऋच आग्नीध्रीये दधिभक्षणे विनियोगः ।** **तद् उक्तं वैताने** — "आग्नीध्रीये दधि भक्षयन्ति 'दधिक्राव्णः' इति" ( वैताश्रौ २३,१७ ) **इति ।**

**तथा पृष्ठ्यषडहे** 'दधिक्राव्णः' **इत्येतामृचम् अर्धर्चशः शंसति । तद् उक्तं वैताने** — " 'दधिक्राव्णो अकारिषम्' इत्यर्धर्चशः" ( वैताश्रौ ३२,३३ ) **इति ।**

**तत्रैव** 'सुतासो मधुमत्तमाः' ( अ २०,१३७,४-६ ) **इति पावमान्याख्यास्तिस्र ऋचः अर्धर्चशः शंसति । तद् उक्तं वैताने** — " 'सुतासो मधुमत्तमाः' इति पावमानीः" ( वैताश्रौ ३२,३३ ) **इति ।**

**तत्रैव** 'अव द्रप्सो अंशुमतीम्' ( अ २०,१३७,७-९ ) **इति तिस्र ऋचः पच्छः शंसति । तद् उक्तं वैताने** — " 'अव द्रप्सो अंशुमतीमतिष्ठद्' इति पच्छः" ( वैताश्रौ ३२,३३ ) **इति ।**

**यद्ध प्राचीरजगन्तोरो मण्डूरधाणिकीः[1] ।**
**हता इन्द्रस्य शत्रवः सर्वे बुद्बुदयाशवः ॥ १ ॥**

यत् । ह । प्राचीः । अजगन्त । उरः । मण्डूरऽधाणिकीः ।
हताः । इन्द्रस्य । शत्रवः । सर्वे । बुद्बुदऽयाशवः ॥ १ ॥

**कर्पृन्नरः कपृथमुद् दधातन चोदयत खुदत वाजसातये ।**
**निष्टिग्र्यः पुत्रमा च्यावयोतय इन्द्रं सबाध इह सोमपीतये ॥ २ ॥**

कर्पृत् । नरः । कपृथम् । उत् । दधातन । चोदयत । खुदत । वाजऽसातये ।
निष्टिग्र्यः । पुत्रम् । आ । च्यवय । ऊतये । इन्द्रम् । सऽबाधः । इह । सोमऽपीतये ॥२॥

**दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।**
**सुरभि नो मुखा करत् प्र ण[2] आयूंषि तारिषत् ॥ ३ ॥**

दधिऽक्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ।
सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥ ३ ॥

**सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।**
**पवित्रवन्तो अक्षरन् देवान् गच्छन्तु वो मदाः ॥ ४ ॥**

---

१. मंडू° > मड्डू° B.　　२. ना मै १,५,१.

सुतासः । मधुमत्ऽतमाः । सोमाः । इन्द्राय । मन्दिनः ।
पवित्रऽवन्तः । अक्षरन् । देवान् । गच्छन्तु । वः । मदाः ॥ ४ ॥

इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् ।
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसा ॥ ५ ॥

इन्दुः । इन्द्राय[1] । पवते । इति । देवासः । अब्रुवन् ।
वाचः । पतिः । मखस्यते । विश्वस्य । ईशानः[2] । ओजसा ॥ ५ ॥

सहस्रधारः पवते समुद्रो वाचमीङ्खयः ।
सोमः पती रयीणां सखेन्द्रस्य दिवेदिवे ॥ ६ ॥

सहस्रऽधारः । पवते । समुद्रः । वाचम्ऽईङ्खयः ।
सोमः । पतिः । रयीणाम्[3] । सखा । इन्द्रस्य । दिवेऽदिवे ॥ ६ ॥

अव द्रप्सो अंशुमतीमतिष्ठदियानः कृष्णो दशभिः सहस्रैः ।
आवत् तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणा अधत्त ॥ ७ ॥

अव । द्रप्सः । अंशुऽमतीम् । अतिष्ठत् । इयानः । कृष्णः । दशऽभिः । सहस्रैः ।
आवत् । तम् । इन्द्रः । शच्या । धमन्तम् । अप । स्नेहितीः । नृऽमनाः । अधत्त ॥ ७ ॥

द्रप्समपश्यं विषुणे चरन्तमुपह्वरे नद्यो अंशुमत्याः ।
नभो न कृष्णमवतस्थिवांसमिष्यामि वो वृषणो युध्यताजौ ॥ ८ ॥

द्रप्सम् । अपश्यम् । विषुणे । चरन्तम् । उपऽह्वरे । नद्यः । अंशुऽमत्याः ।
नभः । न । कृष्णम् । अवतस्थिऽवांसम् । इष्यामि । वः । वृषणः । युध्यत । आजौ ॥८॥

अध द्रप्सो अंशुमत्या उपस्थेऽधारयत् तन्वं तित्विषाणः ।
विशो अदेवीरभ्या३चरन्तीर्बृहस्पतिना युजेन्द्रः ससाहे ॥ ९ ॥

अध । द्रप्सः । अंशुऽमत्याः । उपऽस्थे । अधारयत् । तन्वम् । तित्विषाणः ।
विशः । अदेवीः । अभि । आऽचरन्तीः । बृहस्पतिना । युजा । इन्द्रः । ससाहे ॥ ९ ॥

---

1. इन्द्रय P. 2. ईशान P. 3. रयिणाम् P.

त्वं ह त्यत् सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
गूळ्हे[1] द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥ १० ॥

त्वम् । ह । त्यत् । सप्तऽभ्यः । जायमानः । अशत्रुऽभ्यः । अभवः । शत्रुः । इन्द्र ।
गूळ्हे[2] इति । द्यावापृथिवी इति । अनु । अविन्दः । विभुमत्ऽभ्यः । भुवनेभ्यः । रणम् । धाः ॥ १० ॥

त्वं ह त्यदप्रतिमानमोजो वज्रेण वज्रिन् धृषितो जघन्थ[3] ।
त्वं शुष्णस्यावातिरो वधत्रैस्त्वं गाः इन्द्र शच्येदविन्दः ॥ ११ ॥

त्वम् । ह । त्यत् । अप्रतिऽमानम् । ओजः । वज्रेण । वज्रिन् । धृषितः । जघन्थ ।
त्वम् । शुष्णस्य । अव । अतिरः । वधत्रैः । त्वम् । गाः । इन्द्र । शच्या । इत् । अविन्दः ॥ ११ ॥

तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् ॥ १२ ॥

तम् । इन्द्रम् । वाजयामसि । महे । वृत्राय । हन्तवे । सः । वृषा । वृषभः । भुवत् ॥ १२ ॥

इन्द्रः स दामने कृत ओजिष्ठः स मदे हितः । द्युम्नी श्लोकी स सोम्यः ॥ १३ ॥

इन्द्रः । सः । दामने । कृतः । ओजिष्ठः । सः । मदे । हितः । द्युम्नी । श्लोकी । सः । सोम्यः ॥ १३ ॥

गिरा वज्रो न संभृतः सबलो अनपच्युतः । ववक्ष ऋष्वो अस्तृतः ॥ १४ ॥

गिरा । वज्रः । न । समऽभृतः । सऽबलः । अनपऽच्युतः । ववक्षे । ऋष्वः । अस्तृतः ॥ १४ ॥

इति नवमेऽनुवाके एकचत्वारिंशं सूक्तम् ।

अतिरात्रे अतिरिक्तोकथ्येषु 'महाँ इन्द्रो य ओजसा' इत्यस्य विनियोगः 'तमिन्द्रं वाजयामसि' ( अ २०,४७ ) इत्यनेन सह उक्तः ।

तथा छन्दोमाख्येषु त्रिष्वहःसु अस्य विनियोगस्तत्रैवोक्तः ।

तथा त्र्यहाणां तृतीयेष्वहःसु 'महाँ इन्द्रो य ओजसा' इत्यस्य विनियोगः अभि प्र वः सुराधसम्' ( अ २०,५१ ) इत्यत्र उक्तः ।

तथा चतुरहाणां चतुर्थेष्वहःसु 'महाँ इन्द्रो य ओजसा' ( अ २०,१३८ ) 'य एक इद् विदयते' ( २०,६३,४ ) इत्येतौ आज्योकथस्तोत्रियौ भवतः । तद् उक्तं वैताने — "चतुर्थेषु 'महाँ इन्द्रो य ओजसा', 'य एक इद् विदयते' इति" (वैताश्रौ ४२,११) इति ।

---

१. गूळे Bh,C; गूळ्हे K,Km; घूळ्हे V, ऋ ८,९६,१६. २. गुल्हे P. ३. जगन्थ B,Bh,K.

तथा त्रिककुद्दशाहस्य अष्टमेऽहनि एष आज्यस्तोत्रियो भवति । तद् उक्तं वैताने — "अष्टमे 'महाँ इन्द्रो य ओजसा' इति" ( वैताश्रौ ४२,६ ) इति ।

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ ईव । स्तोमैर्वत्सस्य वावृधे ॥१॥

महान् । इन्द्रः । यः । ओजसा । पर्जन्यः । वृष्टिमान्ऽइव । स्तोमैः । वत्सस्य । ववृधे ॥१॥

प्रजामृतस्य पिप्रतः प्र यद् भरन्त वह्नयः । विप्रा ऋतस्य वाहसा ॥ २ ॥

प्रऽजाम् । ऋतस्य । पिप्रतः । प्र । यत् । भरन्त । वह्नयः । विप्राः । ऋतस्य । वाहसा ॥२॥

कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् । जामि ब्रुवत आयुधम् ॥३॥[1]

कण्वाः । इन्द्रम् । यत् । अक्रत । स्तोमैः । यज्ञस्य । साधनम् । जामि । ब्रुवते । आयुधम् ॥३॥

इति नवमेऽनुवाके द्विचत्वारिंशं सूक्तम् ।

अतिरात्रे अतिरिक्तोक्थेषु स्तोत्रियानुरूपयोरनन्तरम् 'आ नूनमश्विना युवम्' ( अ २०,१३९ ) 'तं वां रथम्' ( अ २०,१४३ ) इति सूक्ते शंसति । तत्र पूर्वसूक्तस्य दशमीं द्वादशीमृचम् उत्तरसूक्तं च पच्छः शंसति । तद् उक्तं वैताने — "'आ नूनमश्विना युवं' 'तं वां रथम्' इति सूक्ते । पूर्वस्य दशमीं द्वादशीमुत्तरं च पच्छः" ( वैताश्रौ २७,२९ ) इति ।

आ नूनमश्विना युवं वत्सस्य गन्तमवसे ।
प्रास्मै यच्छतमवृकं पृथु च्छर्दिर्युयुतं या अरातयः ॥ १ ॥

आ । नूनम् । अश्विना । युवम् । वत्सस्य । गन्तम् । अवसे ।
प्र । अस्मै । यच्छतम् । अवृकम् । पृथु । छर्दिः । युयुतम् । याः । अरातयः ॥ १ ॥

यदन्तरिक्षे यद् दिवि यत् पञ्च मानुषाँ अनु ।
नृम्णं तद् धत्तमश्विना ॥ २ ॥

यत् । अन्तरिक्षे । यत् । दिवि । यत् । पञ्च । मानुषान् । अनु ।
नृम्णम् । तत् । धत्तम् । अश्विना ॥ २ ॥

ये वां दंसांस्यश्विना विप्रासः परिमामृशुः । एवेत् काण्वस्य बोधतम्[2] ।३।

---

१. इतः परम्— तद्वो गाय सुते सचेति तिस्रः ॥ ६ (अ २०,७८) ॥, इन्द्राय मद्वने सुतमिति तिस्रः ॥ ९ (अ २०,११०) ॥ इत्यधिकम् K,K^m,V,Dc. २. बोधतम् B.

ये । वाम् । दंसांसि । अश्विना । विप्रासः । परिऽमममृशुः । एव । इत् । काण्वस्य । बोधतम् ॥ ३ ॥

अयं वां घर्मो अश्विना स्तोमेन परि षिच्यते ।
अयं सोमो मधुमान् वाजिनीवसू येन वृत्रं[1] चिकेतथः ॥ ४ ॥

अयम् । वाम्[2] । घर्मः । अश्विना । स्तोमेन । परि । सिच्यते ।
अयम् । सोमः । मधुऽमान् । वाजिनीवसू इति वाजिनीऽवसू । येन । वृत्रम् । चिकेतथः ॥

यदप्सु यद् वनस्पतौ यदोषधीषु पुरुदंससा कृतम् ।
तेन माविष्टमश्विना ॥ ५ ॥

यत् । अप्ऽसु । यत् । वनस्पतौ । यत् । ओषधीषु । पुरुऽदंससा । कृतम् ।
तेन । मा । अविष्टम् । अश्विना ॥ ५ ॥

इति नवमेऽनुवाके त्रिचत्वारिंशं सूक्तम् ।

यन्नासत्या भुरण्यथो यद् वा देव भिषज्यथः ।
अयं वां वत्सो मतिभिर्न विन्धते हविष्मन्तं हि गच्छथः ॥ १ ॥

यत् । नासत्या । भुरण्यथः । यत् । वा । देवा । भिषज्यथः ।
अयम् । वाम्[2] । वत्सः । मतिऽभिः । न । विन्धते । हविष्मन्तम् । हि । गच्छथः ॥ १ ॥

आ नूनमश्विनोर्ऋषि[3] स्तोमं चिकेत वामया ।
आ सोमं मधुमत्तमं घर्मं सिञ्चादथर्वणि ॥ २ ॥

आ । नूनम् । अश्विनोः । ऋषिः । स्तोमम् । चिकेत । वामया ।
आ । सोमम् । मधुमत्ऽतमम् । घर्मम् । सिञ्चात् । अथर्वणि ॥ २ ॥

आ नूनं रघुवर्तनिं रथं तिष्ठाथो[4] अश्विना ।
आ वां स्तोमा इमे मम नभो न चुच्यवीरत ॥ ३ ॥

आ । नूनम् । रघुऽवर्तनिम् । रथम् । तिष्ठाथः । अश्विना ।
आ । वाम् । स्तोमाः । इमे । मम । नभः । न । चुच्यवीरत ॥ ३ ॥

---

१. वृतं K. २. वामम् P,P². ३. °ऋषिः B,C,R,Cs, ऋ ८,९,७.
४. तिष्ठासो B.

यदद्य वां नासत्योक्थैराचुच्युवीमहि ।
यद् वा वाणीभिरश्विनेवेत् काण्वस्य बोधतम् ॥ ४ ॥

यत् । अद्य । वाम् । नासत्या । उक्थैः । आऽचुच्युवीमहि ।
यत् । वा । वाणीभिः । अश्विना । एव । इत् । काण्वस्य । बोधतम् ॥ ४ ॥

यद् वां कक्षीवाँ उत यद् व्यश्व ऋषिर्यद् वां दीर्घतमा जुहाव ।
पृथी यद् वां वैन्यः सादनेष्वेवेदतो अश्विना चेतयेथाम् ॥ ५ ॥

यत् । वाम् । कक्षीवान् । उत । यत् । विऽअश्वः । ऋषिः । यत् । वाम् । दीर्घऽतमाः । जुहाव । पृथी । यत् । वाम् । वैन्यः । सदनेषु । एव । इत् । अतः । अश्विना । चेतयेथाम् ॥५॥

इति नवमेऽनुवाके चतुश्चत्वारिंशं सूक्तम् ।

यातं छर्दिष्पा[1] उत नः परस्पा भूतं जगत्पा उत नस्तनूपा ।
वर्तिस्तोकाय तनयाय यातम् ॥ १ ॥

यातम् । छर्दिःऽपौ । उत । नः । परःऽपा । भूतम् । जगत्ऽपौ । उत । नः । तनूऽपा ।
वर्तिः । तोकाय । तनयाय । यातम् ॥ १ ॥

यदिन्द्रेण[2] सरथं याथो अश्विना यद् वा वायुना भवथः समोकसा ।
यदादित्येभिर्ऋभुभिः सजोषसा यद् वा विष्णोर्विक्रमणेषु तिष्ठथः ॥ २ ॥

यत् । इन्द्रेण । सऽरथम् । याथः । अश्विना । यत् । वा । वायुना । भवथः[3] । सम्ऽओकसा । यत् । आदित्येभिः । ऋभुऽभिः । सऽजोषसा । यत् । वा । विष्णोः । विऽक्रमणेषु । तिष्ठथः ॥ २ ॥

यदद्याश्विनावहं हुवेय वाजसातये ।
यत् पृत्सु तुर्वणे सहस्तच्छ्रेष्ठमश्विनोरवः ॥ ३ ॥

यत् । अद्य । अश्विनौ । अहम् । हुवेय । वाजऽसातये ।
यत् । पृत्ऽसु । तुर्वणे । सहः । तत् । श्रेष्ठम् । अश्विनोः । अवः ॥ ३ ॥

---

१. छर्दिष्पा K,Km. २. वा इ° K. ३. भरथः P.

आ नूनं यातमश्विनेमा हव्यानि वां हिता ।
इमे सोमासो अधि तुर्वशे यदाविमे कण्वेषु वामथ ॥ ४ ॥

आ । नूनम् । यातम् । अश्विना । इमा । हव्यानि । वाम् । हिता ।
इमे । सोमासः । अधि । तुर्वशे । यदौ । इमे । कण्वेषु । वाम् । अथ ॥ ४ ॥

यन्नासत्या पराके अर्वाके अस्ति भेषजम् ।
तेन नूनं विमदाय प्रचेतसा छर्दिर्वत्साय यच्छतम् ॥ ५ ॥

यत् । नासत्या । पराके । अर्वाके । अस्ति । भेषजम् ।
तेन । नूनम् । विऽमदाय । प्रऽचेतसा[1] । छर्दिः । वत्साय । यच्छतम् ॥ ५ ॥

इति नवमेऽनुवाके पञ्चचत्वारिंशं सूक्तम् ।

अभुत्स्यु[2] प्र देव्या साकं वाचाहमश्विनोः
व्यावर्देव्या मतिं वि रातिं मर्त्येभ्यः ॥ १ ॥

अभुत्सि । ऊं इति । प्र । देव्या । साकम् । वाचा । अहम् । अश्विनोः ।
वि । आवः । देवि । आ । मतिम् । वि । रातिम् । मर्त्येभ्यः ॥ १ ॥

प्र बोधयोषो अश्विना प्र देवि सूनृते महि ।
प्र यज्ञहोतरानुषक् प्र मदाय श्रवो बृहत् ॥ २ ॥

प्र । बोधय । उषः । अश्विना । प्र । देवि । सूनृते । महि ।
प्र । यज्ञऽहोतः । आनुषक् । प्र । मदाय । श्रवः । बृहत् ॥ २ ॥

यदुषो यासि भानुना सं सूर्येण रोचसे ।
आ हायमश्विनो रथो वर्तिर्याति नृपाय्यम् ॥ ३ ॥

यत् । उषः । यासि । भानुना । सम् । सूर्येण । रोचसे ।
आ । ह । अयम् । अश्विनोः । रथः । वर्तिः । याति । नृऽपाय्यम् ॥ ३ ॥

यदापीतासो अंशवो गावो न दुह्र ऊधभिः ।
यद्वा वाणीरनूषत प्र देवयन्तो अश्विना ॥ ४ ॥

---

1. प्रऽचेतसा P°.　　2. अभुत्सु K. (?)

यत् । आऽपीतासः । अंशवः । गावः । न । दुह्रे । ऊधऽभिः ।
यत् । वा । वाणीः । अनूषत । प्र । देवऽयन्तः । अश्विना ॥ ४ ॥

**प्र द्युम्नाय प्र शवसे प्र नृषाह्याय शर्मणे । प्र दक्षाय प्रचेतसा ॥५॥**

प्र । द्युम्नाय । प्र । शवसे । प्र । नृऽसह्याय । शर्मणे । प्र । दक्षाय । प्रऽचेतसा ॥ ५ ॥

**यन्नूनं धीभिरश्विना पितुर्योना निषीदथः । यद्वा सुम्नेभिरुक्थ्या ॥६॥**

यत् । नूनम् । धीभिः । अश्विना । पितुः । योना । निऽसीदथः । यत् । वा । सुम्नेभिः । उक्थ्या[1] ॥ ६ ॥

**इति नवमेऽनुवाके षट्चत्वारिंशं सूक्तम् ।**

'तं वां रथम्' इत्यस्य विनियोगः 'आ नूनमश्विना युवम्' (अ २०,१३९) इत्यत्र उक्तः ।

अतिरात्रे अतिरिक्तोक्थे 'मधुमतीरोषधीः' (अ २०,१४३,८;९) इति द्वे ऋचौ परिधानीयाशस्त्रयाज्ये क्रमेण भवतः । तद् उक्तं वैताने — "'मधुमतीरोषधीः' इति परिधानीया । उत्तरा याज्या" (वैताश्रौ २७,३०) इति ।

**तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः ।**
**यः सूर्यां वहति वन्धुरायुर्गिर्वाहसं पुरुतमं[2] वसूयुम् ॥ १ ॥**

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । पृथुऽज्रयम् । अश्विना । सम्ऽगतिम् । गोः ।
यः । सूर्याम् । वहति । वन्धुरऽयुः । गिर्वाहसम् । पुरुऽतमम् । वसुऽयुम् ॥ १ ॥

**युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः ।**
**युवोर्वपुरभि पृक्षः सचन्ते वहन्ति यत् ककुहासो रथे वाम् ॥ २ ॥**

युवम् । श्रियम् । अश्विना । देवता । ताम् । दिवः । नपाता । वनथः । शचीभिः ।
युवोः । वपुः । अभि । पृक्षः । सचन्ते । वहन्ति । यत् । ककुहासः । रथे । वाम् ॥ २ ॥

**को वामद्या करते रातहव्य ऊतये वा सुतपेयाय वार्कैः ।**
**ऋतस्य वा वनुषे पूर्व्याय नमो येमानो अश्विना ववर्तत् ॥ ३ ॥**

कः । वाम् । अद्य । करते । रातऽहव्यः[3] । ऊतये । वा । सुतऽपेयाय । वा । अर्कैः ।
ऋतस्य । वा । वनुषे । पूर्व्याय । नमः । येमानः । अश्विना । आ । ववर्तत् ॥ ३ ॥

---

1. °क्था P. 2. पुरूतमं B. 3. °व्याः P.

हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योप यातम् ।
पिबाथ इन्मधुनः सोम्यस्य दधथो रत्नं विधते जनाय ॥ ४ ॥

हिरण्ययेन । पुरुभू इति पुरुऽभू । रथेन । इमम्[1] । यज्ञम् । नासत्या । उप । यातम् ।
पिबाथः । इत् । मधुनः । सोम्यस्य । दधथः । रत्नम् । विधते । जनाय ॥ ४ ॥

आ नो यातं दिवो अच्छा पृथिव्या हिरण्ययेन[2] सुवृता रथेन ।
मा वामन्ये नि यमन् देवयन्तः सं यद् ददे नाभिः पूर्व्या वाम् ॥ ५ ॥

आ । नः । यातम् । दिवः । अच्छ । पृथिव्याः । हिरण्ययेन । सुऽवृता । रथेन ।
मा । वाम् । अन्ये । नि । यमन् । देवऽयन्तः । सम् । यत् । ददे । नाभिः । पूर्व्या । वाम् ॥५॥

नू नो रयिं पुरुवीरं बृहन्तं दस्रा मिमाथामुभयेष्वस्मे ।
नरो यद् वामश्विना स्तोममावन्त्सधस्तुतिमाजमील्हासो[3] अग्मन् ॥ ६ ॥

नु । नः । रयिम् । पुरुऽवीरम् । बृहन्तम् । दस्रा । मिमाथाम् । उभयेषु । अस्मे इति ।
नरः । यत् । वाम् । अश्विना । स्तोमम् । आवन् । सधऽस्तुतिम् । आजऽमील्हासः । अग्मन् ॥६॥

इहेह यद् वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।
उरुष्यतं[4] जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥ ७ ॥

इहऽइह । यत् । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना ।
उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक्[5] ॥ ७ ॥

मधुमतीरोषधीर्द्याव आपो मधुमन्नो[6] भवत्वन्तरिक्षम् ।
क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ ८ ॥

मधुऽमतीः । ओषधीः । द्यावः । आपः । मधुऽमत् । नः । भवतु । अन्तरिक्षम् ।
क्षेत्रस्य । पतिः । मधुऽमान् । नः । अस्तु । अरिष्यन्तः । अनु । एनम् । चरेम ॥ ८ ॥

पनाय्यं तदश्विना कृतं वां वृषभो दिवो रजसः पृथिव्याः ।
सहस्रं शंसा उत ये गविष्टौ सर्वाँ इत् ताँ उप याता पिबध्यै ॥ ९ ॥

---

१. इमाम् P.　　२. हिरण्य° B,Bh.　　३. °मीहासो B,Cs; °मीळ्हासो K,Km, V, ऋ ४,४४,६; °मीढासो Bh,C,Dc.　　४. उरुष्यन्तं C,K,Km,Sm.　　५. °इक् P,P².
६. मधुमान्नो B.

पनाय्यम् । तत् । अश्विना । कृतम् । वाम् । वृषभः । दिवः । रजसः । पृथिव्याः । सहस्रम् । शंसाः । उत । ये । गोऽइष्टौ । सर्वान् । इत् । तान् । उप । यात । पिबध्यै ॥९॥

नवमेऽनुवाके सप्तचत्वारिंशं सूक्तम् ।

इति नवमोऽनुवाकः ।



इत्याथर्वणसंहितायां शस्त्रकाण्डाभिधानं
विंशतितमं काण्डं
समाप्तम् ।